# कैम्पा के संग संग लेते मज़ा हम!

कैम्पा ऑरेंज फ्लेवर-
मौजमस्ती का स्वाद!




कृत्रिम स्वाद—इसमें फलों का रस या फलों का सार नहीं है।

OBM/5361

# चन्दमामा

एप्रिल्– १९८५

*

अन्तरङ्गम्



*


प्रतिकृतिमूल्यम् रू. २-००

वार्षिकं ग्राहकशुल्कम् रू. २४-००

# चन्दमामा

संस्थापकः 'चक्रपाणिः' सञ्चालकः 'नागिरेड्डी'

'संस्कृतं कठिनम्' इति भावना सर्वत्र व्याप्ता दृश्यते। किमर्थम् एषा भावना उत्पन्ना? अत्र बहूनि कारणानि भवेयुः चेदपि प्रधानं कारणम् एतत् यत् 'संस्कृतं मया लब्धुं शक्यते' इति भावना एव विलुप्ता।

एकम् उदाहरणं परिशील्यामः- कश्चन आम्रवृक्षः। फलानि हस्तलभ्यानि। समीपे कश्चन बालः अस्ति। किन्तु तस्य हस्तौ बद्धौ। सः आम्रफलार्थं बहुधा प्रयत्नं करोति। किन्तु अन्ते निराशः भवति।

अपरम् उदाहरणम्- आम्रवृक्षः अत्युन्नतः। फलानि अपि उपरि सन्ति। पार्श्वस्थस्य बालस्य हस्तौ उन्मुक्तौ स्तः। अतः बालः ससन्तोषं पाषाणान् दण्डान् च क्षिपति। महता प्रयत्नेन एकम् एव फलं प्राप्तं चेदपि तस्य सन्तोषः एव।

प्रथमोदाहरणे फलानि हस्तलभ्यानि आसन्। तथापि निराशा। द्वितीयोदाहरणे फलानि कष्टलभ्यानि चेदपि सन्तोषः!

चिन्तयन्तु भवन्तः- फलसमृद्धः वृक्षः, अल्पप्रयत्नेन लभ्यानि मधुराणि फलानि, बालाश्च उन्मुक्ताः! परिसरः कथम् उत्साहपूर्णः भवेत्!

अतः 'संस्कृतं मया अपि लब्धुं शक्यम्' इति भावना यथा जनमनस्सु उदियात् तथा प्रयत्नः करणीयः अस्माभिः।

सम्पुटः-२ एप्रिल्-८५ सञ्चिका-१

प्रतिकृतिमूल्यम् रू. २/- वार्षिकं ग्राहकशुल्कम् रू. २४/-






# चन्दमामा प्रजल्पति



## प्रथमराष्ट्रपतेः शतमानोत्सवः

स्वतन्त्रभारतस्य प्रथमराष्ट्रपतेः बाबूराजेन्द्रप्रसादस्य जन्म १८८५तमे वत्सरे बिहारप्रान्ते जातम्। अस्मिन् वत्सरे तस्य जयन्त्युत्सवः प्रचलिष्यति। यौवने स्वन्यायवादित्वं परित्यज्य-एषः स्वातन्त्र्यान्दोलने भागं गृहीतवान्। एषः त्रिवारं राष्ट्रिय कांग्रेस्पक्षस्य अध्यक्षत्वेन निर्वाचितः आसीत्। १९५०तमे वत्सरे एषः अस्य देशस्य राष्ट्रपतिः जातः। अनन्तरं एषः पुनरपि द्विवारं राष्ट्रपतित्वेन निर्वाचितः आसीत्।

## विश्वे अतिविशालः 'केक्'

केनडादेशस्य हयिगेट्नगरस्य निवासी हिल्टन्, विश्वे एव अतिविशालं 'केक्' नामकं खाद्यं निर्मितवान्। ४०० किलो भारयुतस्य एतस्य खाद्यस्य निर्माणार्थं महाकाराणि सिमेण्ट् मिक्स्चरयन्त्राणि क्रेनयन्त्राणि च उपयुक्तानि। द्विसहस्रं जनाः एतत् खादितवन्तः। हिल्टन्महोदयः इतः पूर्वं अतिविशालं ऐसक्रीम् खाद्यं निर्मितवान् आसीत्।






## शिक्षणस्य आरम्भः कदा?

अमेरिकादेशस्य विज्ञानिनः वदन्ति यत् मातृगर्भे स्थितः एव शिशुः शिक्षणं प्राप्नोति इति। एतदनुसारेण 'महाभारतकाले अभिमन्युः मातुः सुभद्रायाः गर्भे स्थितः एव पित्रा अर्जुनेन उपदिष्टां युद्धविद्यां श्रुतवान्, सम्यक् अवगतवान् च' इति यत् श्रूयते तत् असत्यं न इति वयं निर्णेतुं शक्नुमः।

# भवन्तः जानन्ति वा?

१. संयुक्तराष्ट्रसङ्घस्य प्रथमाधिवेशनं कदा कुत्र प्रवृत्तम्?

२. कनिष्कस्य राजधानी पुरुषपुरनगरं केन नामान्तरेण प्रसिद्धम्?

३. काञ्चीपुरम् राजधानीं प्रकल्प्य कः दक्षिण-भारतीयः राजा शासनं कृतवान्?

४. दिल्लीनगरस्य निर्माणे नामकरणे च कस्य महाराजस्य प्रयत्नं कारणम्?

५. सुल्तान् सिकन्दर् शाह् लोधी प्रख्यातस्य कस्य नगरस्य निर्माणं कृतवान्?

(उत्तराणि ६४ तमे पृष्ठे)



# श्रमेण सम्पादनम्

गणपतिः बाल्यात् आरभ्य परिश्रमेण धनं सम्पादितवान् आसीत्। किन्तु सः व्ययविषये बहु जागरूकः। अतः सर्वे तं मितव्ययी गणपतिः इत्येव आह्वयन्ति स्म।

इदानीं गणपतिः षष्टिवर्षीयः वृद्धः। तथापि सः स्वकीयानि कार्याणि स्वयं करोति स्म। कदापि अन्यस्य उपरि स्वकीयं भावं न आरोपयति स्म। तदीया पत्नी अपि पत्यनुगुणा आसीत्। किन्तु तदीयाः त्रयः पुत्राः तु अलसाः। ते कदापि पितुः वचनानि न पालयन्ति स्म।

गणपतिसमीपे विशाला कृषिभूमिः आसीत्। तत्र जलव्यवस्था अपि उत्तमा एव। वार्धक्यकारणतः गणपतिः सर्वेषां कार्याणां परिवीक्षणं स्वयं कर्तुं न शक्नोति स्म। अतः सः पुत्राणां साहाय्यं याचितवान्। अलसाः पुत्राः कार्यं कर्तुम् अनिच्छन्तः भूमिम् अन्यस्य वशे समर्पितवन्तः। सः कृषिकः तु सम्पादिते धान्ये अधिकभागं स्वसमीपे संस्थाप्य किञ्चिदेव गणपतये ददाति स्म।

गणपतिः अन्येभ्यः ऋणम् अपि ददाति स्म। वस्त्रवाणिज्यम् अपि करोति स्म। यदा सः ऋणदानादिव्यवहारं सर्वं स्वयं द्रष्टुं न शक्तवान् तदा कञ्चित् लिपिकारं साहाय्यार्थं स्वीकृतवान्। एवमेव वस्त्रवाणिज्यम् अपि व्यवहारदक्षस्य कस्यचित् हस्ते समर्पितवान् यावान् लाभांशः तैः दीयते तावन्तं विनाविरोधं स्वीकरोति स्म गणपतिः।

यदि तदीयाः पुत्राः एकैकस्य कार्यस्य पर्यवेक्षणं स्वयं कुर्युः तर्हि कोऽपि क्लेशः न अभविष्यत् एव। किन्तु ते पुत्राः धनव्यये केवलम् आसक्ताः आसन्। सम्पादनस्य विषये तेषां काऽपि चिन्ता एव न आसीत्। अतः गणपतेः चिन्ता प्रतिदिनं वर्धते स्म।



गणपतेः गृहं परितः विशाला भूमिः रिक्ता आसीत्। यदा कृषिवाणिज्यादिव्यवहाराः न्यूनाः जाताः तदा गणपतिः परितः विद्यमानायां भूमौ शाकानि आरोपयितुम् आरब्धवान्। अल्पे एव काले गृहं परितः रमणीयम् उद्यानं निर्मितम्।

सस्यानां कृते कुल्यादीनां निर्माणे जलसेचने वा तदीयाः पुत्राः किञ्चिदपि साहाय्यं न कुर्वन्ति स्म। "अस्मिन् अन्तिमे वयसि अपि एषः सम्पादनव्यामोहं न परित्यक्तवान्" इति पितरम् एव उपहसन्तः परस्परं सन्तोषम् अनुभवन्ति स्म।

गणपतेः उद्यानतः यथेष्टं धनसम्पादनं भवति स्म। ततः उपलभ्यमानानि शाकानि पुष्पाणि वा विनाश्रमेण विक्रीयन्ते स्म। एवं स्थिते कदाचित् अनिरीक्षिता आपत् आपतिता।

गणपतेः पार्श्वस्थिते भाटकगृहे सोमनाथनामकः कश्चित् नवीनतया आगत्य वासम् आरब्धवान्। सः क्षीरविक्रयणं करोति स्म। तस्य समीपे २०-२५ अजाः आसन्। मार्गेषु यत् लभ्यते तदेव अजानाम् आहारः। अतः स्वाभाविकतया अजानां दृष्टिः हरिद्वर्णेन शोभमानस्य गणपतेः उद्यानस्य उपरि पतिता। ताः अजाः प्रतिदिनं कथञ्चित् अवकाशं सम्पाद्य उद्यानं प्रविशन्ति स्म। प्राणसमस्य उद्यानस्य दुरवस्थां दृष्ट्वा गणपतिः बहु खिन्नः। अतः सः 'उद्यानस्य रक्षणव्यवस्थां कुर्वन्तु' इति पुत्रान् पुनः पुनः प्रार्थितवान्। किन्तु ते पुत्राः एतत् न श्रुतवन्तः एव।

इदानीं गणपतिः उद्यानं परितः दृढां वृतिं निर्मितवान्। तथापि अजाः कदाचित् वृतिं छिद्रीकृत्य उद्यानं प्रविशन्ति स्म एव। गणपतिः तु प्रयत्नशीलः। अतः सः उद्यानं परितः कण्टकानि आनीय स्थापितवान्। सुरक्षणदृष्ट्या द्वारे काष्ठनिर्मितं कवाटं योजितवान्।

कानिचन दिनानि यावत् एषः उपायः फलकारी इव दृष्टः। किन्तु अनन्तरकाले अजाः शृङ्गसाहाय्येन चातुर्यपूर्वकं काष्ठमयं तत् द्वारम् उद्घाटयितुं ज्ञातवत्यः एव।

अन्ते विवशः गणपतिः सोमनाथसमीपं गत्वा स्वकीयां परिस्थितिं निवेदितवान्, उक्तवान् च- "मित्र ! भवान् कथञ्चित् भवतः अजाः नियन्त्रयतु । ताः प्रतिदिनम् आगत्य मदीयं रमणीयम् उद्यानं नाशयन्त्यः सन्ति। तासां निवारणार्थम् अहं बहुधा प्रयत्नं कृतवान्। किन्तु अहम् असफलः" इति ।

"किं वदति भवान् ? भवतः त्रयः पुत्राः अपि एतासां नियन्त्रणे असमर्थाः । एवं स्थिते किम् अहम् एकाकी ताः नियन्त्रयितुं शक्नोमि वा ? वस्तुतः मम अजाः साधुस्वभावाः । अद्यावधि कस्य अपि आक्षेपः न श्रुतः एव । केवलं भवतः मुखात् आक्षेपः श्रुतः" इति सोमनाथः उक्तवान् ।

'सोमनाथस्य वचनं सत्यम्' इति गणपतिः अङ्गीकृतवान् । अतः अन्यः उपायः अन्वेष्टव्यः' इति सः चिन्तितवान् ।

बहुधा आलोचनं यदा कृतं तदा उपायः कश्चन स्फुरितः । गणपतिः उद्यानस्य अन्तः द्वारस्य पार्श्वे एकं विशालं गर्तं निर्मितवान् । तन्मध्ये मार्गे तिर्यग्रूपेण वृत्ताकारकान् त्रीन् नालान् परस्परसंलग्नतया स्थापितवान् । गोलाकारेण स्थितानां नालानां उपरि अजानां पादाः स्थिरं न तिष्ठन्ति किल ? अतः अजाः द्वारम् उद्घाटयितुं शक्नुवन्ति चेदपि अग्रे गन्तुं न शक्नुवन्ति स्म ।



कानिचन दिनानि अतीतानि । अजानां पीडायाः अभावात् गणपतिः निश्चिन्तः आसीत् । किन्तु एतत् समाधानं दीर्घकालं न स्थितम् । यतः पुनः कदाचित् अजा काचित् आगत्य तान् नालान् अतिक्रम्य उल्लङ्घयितुं प्रयत्नं कृतवती। किन्तु नालयोः मध्ये सा पतिता। तस्याः परिस्थितिं दृष्ट्वा खिन्नः गणपतिः दयया तां उन्नीय बहिः त्यक्तवान् ।

सा अजा न निराशा। सा पुनः द्विवारं प्रयत्नं कृत्वा अन्ते नालान् उल्लङ्घ्य उद्यानं प्रविष्टवती एव ।

साफल्येन तृप्ता अजा सन्तोषपूर्वकं खादन्ती आसीत् । तदा गणपतिः तत्र आगतवान् । सस्यानि नाशयन्तीम् अजां दृष्ट्वा

अपि सः मौनं स्थितवान्। यतः उद्यानरक्षणे तेन कृताः सर्वे प्रयत्नाः असफलाः आसन्। सः तत्रैव स्थित्वा अजायाः कार्यं पश्यन् आसीत्।

अत्रान्तरे गणपतेः त्रयः पुत्राः अपि तत्र आगतवन्तः। ते आश्चर्येण पृष्टवन्तः च- "तात, प्राणप्रियम् उद्यानं अजा नाशयन्ती अस्ति। तथापि भवान् तूष्णीं स्थितवान् किल? सर्वप्रयत्नानाम् असाफल्यं दृष्ट्वा किं भवान् हताशः?" इति।

गणपतिः किञ्चित्कालं मौनं स्थित्वा पुनः उक्तवान्- "अये, नाशयतु नाम। तस्याः कृते एव मया उद्यानं निर्मितम्। तस्याः खादनेन मदीयं पापं निवृत्तं भवेत्, पुण्यसम्पादनम् अपि किञ्चित् भवेत्" इति।

तदा पुत्राः आश्चर्येण पृष्टवन्तः- "तात! किं वदति भवान्? भवतः वचनस्य तात्पर्यं न ज्ञातवन्तः वयम्" इति।

"स्वकीयम् आहारं सम्पादयितुम् एषा अजा प्रयत्नेन तावद्दूरम् उल्लङ्घितवती। निरुपयुक्तान् पुत्रान् पालयन् अहं पापभाक्। तच्च पापं परिश्रमं कुर्वत्याः अजायाः आहारदानेन क्षालितं भविष्यति। अद्य मया निश्चितं यत् यः परिश्रमेण जीवति तस्मै एव मदीया सम्पत्तिः दातव्या इति। परिश्रमम् अहं पुरस्करोमि" इति उक्तवान् गणपतिः।

एतत् श्रुत्वा ते पुत्राः लज्जाम् अनुभूतवन्तः। ते आलोचितवन्तः "स्वकीयं आहारं सम्पादयितुम् पशुः अजा अपि परिश्रमं करोति। स्वजीवनार्थम् मानवैः अस्माभिः तावान् अपि परिश्रमः न कृतः। अद्य पिता अजायाः उपरि दयां प्रदर्शयन् अस्ति। एवम् एव कालान्तरे सः दरिद्राय कस्मैचित् समग्रां सम्पत्तिं दद्यात् अपि" इति।

एतया आशङ्कया पीडिताः ते आलस्यं त्यक्त्वा कार्यम् आरब्धवन्तः। त्रयः अपि पितुः मार्गदर्शनस्य अनुसारं कार्यं कुर्वन्तः तदीयां प्रीतिं सम्पादितवन्तः।






## २

[सूर्यवर्मणः मरणं ज्ञात्वा सुबाहुः एतां वार्तां सूर्यवर्मणः पुत्राय चन्द्रवर्मणे निवेदयितुम् इच्छन् अश्वम् आरुह्य धावितवान्। मार्गे सर्पकेतोः अनुचराः तस्य अश्वं मारितवन्तः। शत्रूणाम् आक्रमणतः आत्मानं रक्षन् सुबाहुः अग्रे गतवान्। मध्यरात्रे दीपस्य प्रकाशे विद्यमानान् जनान् दृष्टवान् च। एतन्मध्ये केचन अश्वारोहिणः'अये तिष्ठतु' इति वदन्तः तस्य समीपम् आगतवन्तः। ततः . . .]

'अये' इति दर्पेण वदतः आगच्छतः सैनिकान् दृष्ट्वा सुबाहुः एकक्षणं स्तम्भीभूतः। 'मृत्युः समीपे आगतः एव' इति चिन्तयित्वा सः भीतः। वीरपुरं प्रति प्रभुविषयिण्याः वार्तायाः प्रापणानन्तरं यदि मृत्युः आगतः स्यात् तर्हि सः भीतः न भवति स्म। इदानीं तु परिस्थितिः विषमा अस्ति। तदीयं मरणं वीरपुरस्य नाशाय अपि भविष्यति। अतः सः मनसि भगवन्तं प्रार्थितवान्- 'भगवन्! एतेषाम् अश्वारोहिणाम् आक्रमणतः मां कथञ्चित् रक्षतु' इति।

"अये, भवान् कः? किमर्थं किमपि न वदति?" इति वदन् कश्चित् अश्वारोही सुबाहुसमीपम् आगतवान्। तं केशेषु गृहीत्वा इतस्ततः आकृष्टवान् च।

तदा समूहे स्थितः ग्रामवासी कश्चित् सहानुभूतिपूर्वकं उच्चैः उक्तवान्- "महानुभाव! भिक्षुकं किमर्थं पीडयति? वराकः सः बुभु-



क्षया पिपासया च तीव्रं पीडितः वक्तुम् अपि न शक्नोति प्रायः। भवतां दर्शनेन भीतः अपि'' इति।

एतद्वचनस्य श्रवणेन सुबाहोः मनसि धैर्यम् उत्पन्नम्। 'भिक्षुकरूपेण अभिनयन् अहं कथञ्चित् एतान् वञ्चयितुं शक्नोमि' इति तदीयः विश्वासः दृढः जातः।

''आर्य ! खादितुं किमपि अन्नम् . . .'' इति वदन् सुबाहुः दीनतापूर्णदृष्ट्या विशाल-नेत्राभ्यां सैनिकं दृष्टवान्। तदीयस्य अश्वस्य खलीनं हस्ते गृहीतवान् च।

''छी, छी ! का इयं पीडा। एषः कश्चित् गूढचरः स्यात् इति चिन्तितवान् आसम्। अये, अपसरतु इतः'' इति उक्त्वा सः अश्वारोही अश्वं प्रेरयन् अन्यत्र गतवान्।

''एषः कथं गूढचरः भवितुम् अर्हति ! एतस्य शरीरे प्राणाः सन्ति वा न वा इत्येव संशयः। एतस्य मुखम् ! वस्त्राणि ! एषः कश्चित् शनैः अनुचरः इव भाति। अये, भवान् भवतः शरीरस्य भारं वोढुम् एव न शक्नोति। किमर्थं वा भवतः हस्ते एषः स्थूलः दण्डः ?'' इति परिहासपूर्वकम् अन्यः सैनिकः उक्तवान्।

''महाराज ! अरण्ये विघ्नम् उत्पादयतां व्याघ्राणाम् वृकाणां च अपसारणार्थम् एषः दण्डः आवश्यकः'' इति दैन्येन उक्तवान् सुबाहुः।

सुबाहोः एतत् उत्तरं श्रुत्वा समूहे विद्यमानाः जनाः अपि उच्चैः हसितवन्तः। केचन उपहासपूर्वकं तम् उक्तवन्तः- ''कीदृशी मृगया भवतः ! उत्साहेन एकं पदम् अपि अग्रे स्थापयितुम् असमर्थः भवान्। एवं स्थिते व्याघ्राणां वृकाणां च मारणम् ! ओहो, अद्भुता वार्ता !'' इति।

''महानुभावाः ! किञ्चित् आहारदानेन अनुगृह्णन्तु। अनन्तरं मम पराक्रमं पश्यन्तु। एकसप्ताहतः अहं निराहारः अस्मि। केवलं जलपानेन प्राणधारणं कृतवान् अस्मि। अन्यथा एकं व्याघ्रं किं, व्याघ्रद्वयं युगपत् एव मारयेयम्'' इति सुबाहुः उक्तवान्।



सुबाहुवचनविषये अश्वारोहिषु कस्यापि लक्ष्यं न आसीत्। अश्वारोहिणां नायकः स्वकीयम् अश्वं प्रेरयन् उक्तवान्- "भवन्तः सर्वे शीघ्रम् एव राक्षसगिरि-समीपम् आगच्छन्तु। तत्र सर्वेभ्यः आवश्यकानि आयुधानि दीयन्ते। सूर्योदयतः पूर्वं वीरपुरम् अस्माकम् अधीने भविष्यति" इति। अनन्तरं 'सर्पकेतुमहाराजः जयतात्' इति जयघोषं कृत्वा अग्रे गतवान्। अन्ये अश्वारोहिणः अपि जयघोषं कुर्वन्तः स्वनायकम् अनुसृतवन्तः।

अश्वारोहिणां निर्गमनानन्तरं समूहे स्थिताः केचन सुबाहुसमीपम् आगत्य तम् परितः स्थितवन्तः। तेषु कश्चित् कुतूहलेन सुबाहुं पृष्टवान्- "अये मित्र! भवान् तु द्रष्टुं युवकः इव भाति। हस्तयोः पादयोः वा काऽपि न्यूनता अपि नास्ति। एवं स्थिते भवान् गृहं गृहं गत्वा भिक्षायाचनं करोति किल! किमर्थम् एषा दुरवस्था?" इति।

"तत् अहम् अपि न जानामि। तत् ज्ञातुं एव पञ्चवर्षेभ्यः अस्य पर्वतस्य उपरि स्थितस्य कस्यचित् गुरोः सेवां कुर्वन् अस्मि। अद्यावधि तस्य अनुग्रहः न प्राप्तः। एकघण्टातः पूर्वं मद्विषये प्रसन्नःसः गुरुःदीपधारिणः भवतः प्रदर्श्य उक्तवान् यत् अद्य प्रातः तेषां दीपधारिणां शनिपीडा दूरङ्गता भवति, तैः सह ये भवन्ति तेषाम् अपि शनिपीडा दूरं गच्छति। अतः भवान् तान् अनुसरतु" इति। तेषाम् आदेशं शिरसा वहन् अहं त्वरया भवतः समीपम् आगतवान् अस्मि' इति सुबाहुः उक्तवान्।

सुबाहोः वचनं श्रुत्वा तं परितः विद्यमानाः जनाः सर्वे आश्चर्यचकिताः सन्तुष्टाः च। तेषु कश्चित् उत्साहेन उक्तवान्- "बहुकालतः वयम् अपि तस्य महापुरुषस्य नाम श्रृण्वन्तः स्मः। किन्तु अद्यावधि अस्मासु केनापि सः न दृष्टः। प्रातःकाले वयं वीरपुरम् आक्रम्य लुण्ठयामः। तदर्थम् एव प्रस्थिताः। सः महापुरुषः दिव्यदृष्टियुतः। अतः सः दिव्यदृष्ट्या एव सर्वं ज्ञातवान् स्यात्। अद्य अस्माकं विजयः तु निश्चितः। गच्छामः तावत्। शीघ्रम् इतः

प्रस्थानं कुर्मः'' इति।

अत्रान्तरे तेषु केचन धावन्तः ग्रामं गत्वा अल्पे एव काले सुबाहुनिमित्तं फलानि अन्नं पानीयं च आनीतवन्तः। सुबाहुः संतोषपूर्वकं स्वकीयम् उदरं पूरितवान्। अन्ये केचन नवीनानि वस्त्राणि आनीय तस्य पुरतः स्थापयन्तः उक्तवन्तः- "भवान् एतानि छिन्नानि वस्त्राणि निष्कास्य नवीनानि वस्त्राणि धारयतु'' इति।

'यदि नवीनानि वस्त्राणि धारयेयं तर्हि मार्गे कश्चित् मम परिचयं प्राप्नुयात् एव' इति चिन्तयित्वा सुबाहुः तान् जनान् प्रीतिपूर्वकदृष्ट्या पश्यन् उक्तवान्- ''बान्धवाः! भवतां स्नेहभावेन अहं सन्तुष्टः अस्मि, कृतज्ञश्च अस्मि। किन्तु वस्तुस्थितिः एषा अस्ति यत् यदि अहं नूतनवस्त्राणि धारयामि तर्हि गुरुवर्याणाम् आज्ञा उल्लङ्घिता भविष्यति। मम शरीरं प्रविश्य यः शनिः मां पीडयन् अस्ति सः प्रातःकालतः पूर्वं दूरं गच्छति। तदनन्तरम् एव अहं नूतनवस्त्राणि धारयितुं शक्नोमि'' इति।

सुबाहोः उत्तरेण सन्तुष्टाः केचन उच्चैः जयशब्दम् उच्चरितवन्तः। अन्ये केचन कुतूहलेन सुबाहुं पृष्टवन्तः- 'अये मित्र! भवान् भवतः नाम एव न सूचितवान् किल? भवतः नाम किम्?'' इति।

''मम नामः . .? मातापितृभ्यां तु नामकरणं कृतम्। किन्तु इदानीं किं तेन? तन्नामकारणतः एव अहम् अद्यावधि शनिना पीड्यमानः अस्मि। अतः गुरोः आज्ञा अस्ति यत् मया



कदापि स्वनाम न उच्चरणीयम् इति। यदा शनिपीडातः मुक्तिः तदा . . ." इति वदन् सुबाहुः अग्रिमवचनं चिन्तयन् आसीत्। तावति काले तेषु कश्चित् उक्तवान्- "अद्य वयं सर्वे शनिपीडातः उन्मुक्ताः भवामः। अतः भवतः नाम शनिमर्दनः इति अस्तु" इति। तत्क्षणे 'शनिमर्दनः जयतात्' इति वचनस्य प्रतिध्वनिः सर्वत्र प्रसृतः।

अनन्तरं सर्वे दीपसाहाय्येन मार्गं पश्यन्तः राक्षसगिरिं प्रति प्रस्थिताः। तेषां मध्ये प्रचलता परस्परवार्तालापेन सुबाहुः ज्ञातवान् यत् एते सर्वे दरिद्राः। सर्पकेतुः एतेभ्यः धनधान्यादीनां लोभं प्रदर्शितवान् अस्ति, तेन आकृष्टाः एते जनाः वीरपुरं प्रति प्रस्थिताः सन्ति इति।

"वीरपुरविषये अहं सम्यक् न जानामि। वीरपुरस्य शासकः सूर्यवर्मा प्रजापीडकः अस्ति वा?" इति समूहे स्थितं कञ्चित् पुरुषं पृष्टवान् सुबाहुः।

तदा कश्चित् ग्रामवासी हसन् उक्तवान्- "माण्डलिकेषु तादृशः सज्जनः कः अस्ति यः प्रजाः न पीडयति। वयम् अपि सूर्यवर्मणः विषये अधिकं न जानीमः। किन्तु एतत् तु सत्यं यत् सर्पकेतुसदृशः प्रजापीडकः जगति अन्यः कुत्रापि नास्ति, न भविष्यति च" इति।

"एवं तर्हि वीरपुरस्य लुण्ठनार्थम् अस्माभिः किमर्थं गन्तव्यम्? एतेन सर्पकेतोः सहाय्यकाः भवामः किल वयम्?" इति सुबाहुः पृष्टवान्।

अत्रान्तरे अन्ये त्रिचतुराः सम्भाषणमध्ये





प्रविष्टवन्तः। ते सुबाहोः प्रश्नं श्रुत्वा हसन्तः उक्तवन्तः- ''वस्तुस्थितिः एवम् अस्ति यत् सर्पकेतोः साहाय्यं कर्तुम् इच्छन्तः वीरपुरस्य उपरि आक्रमणं न कुर्मः। 'आक्रमणं कृतं चेत् भवतां साहाय्यं करिष्यामि' इति सर्पकेतुना उक्तम् अस्ति। अन्यच्च वीरपुरे लुण्ठनेन यत् प्राप्यते तत्सर्वम् अस्मदीयम् एव। तत्र सर्पकेतोः तदनुचराणां वा भागः नास्ति एव'' इति।

एतेन वार्तालापेन सुबाहुः ज्ञातवान् यत् एते ग्रामीणाः मुग्धभावेन दुराशया च आक्रान्ताः सन्ति। उपदेशशतेन अपि किमपि प्रयोजनं न भवेत् इति। ग्रामीणानां दृष्ट्या सर्वे शासकाः समानाः। अवकाशे प्राप्ते इतरे एतान् ग्रामीणान् वञ्चयन्ति। अतः सन्दर्भानुसारम् इतरेषां लुण्ठनम् अस्मदीयं कर्तव्यम्' इति एते चिन्तयन्ति। 'परस्परलुण्ठनात्मकम् एव जगत्' इति एतेषां विचारः।

किञ्चित्कालानन्तरं सर्वे राक्षसगिरिसमीपम् आगतवन्तः। तत्र इतः पूर्वम् एव शतशः जनाः सम्मिलिताः आसन्। बहूनां हस्तेषु दीपाः ज्वलन्ति स्म। केचन सैनिकाः एतान् सर्वान् पङ्क्तिशः स्थापयन्ति स्म। एतेषां दलम् अपि तस्मिन् महासमूहे प्रविष्टम्।

एतदनन्तरं नायकः इव दृश्यमानः कश्चित् अश्वारोही अग्रे आगतवान्। सम्मिलितान् जनान् उद्दिश्य उक्तवान् च- ''अत्यन्तशक्तिशालिनः दयाशीलस्य सर्पकेतोः अनुग्रहेण इतः परं भवन्तः दारिद्र्यपिशाचितः उन्मुक्ताः भविष्यन्ति। किन्तु इदानीं समस्या उपस्थिता अस्ति यत् वीरपुरं कथं प्रवेष्टव्यम् इति। कथञ्चित् द्वारपालकान् वञ्चयित्वा द्वारम् उद्घाटयामः चेत् पुनश्च अस्मान् अवरोद्धुं कोऽपि न शक्नोति। अतः भवत्सु शतं जनैः पूर्वम् एव नगरद्वारसमीपं गन्तव्यम्। ''सर्पकेतुः अस्माकं ग्रामस्य उपरि आक्रमणं कृतवान्'' इति भवद्भिः कोलाहलः करणीयः। भवताम् आर्तनादं श्रुत्वा द्वारपालकाः द्वारम् उद्घाटयन्ति। तदा नागरिकवेषेण स्थिताः अस्मदीयाः सैनिकाः

हठात् नगरं प्रविशन्ति ।

भवन्तः प्रथमं सैनिकानां प्रवेशार्थम् अवकाशं कल्पयन्तु । सैनिकान् अनुसृत्य भवन्तः अपि प्रविशन्तु । यथेष्टं लुण्ठयन्तु च । भवन्तः सदा "महाराजः यशोवर्धनः जयतात्" इति घोषणां कुर्वन्तु । एतत् श्रुत्वा भवन्तः यशोवर्धनस्य पक्षीयाः इति चिन्तयन्तः सूर्यवर्मणः सैनिकाः भवताम् उपरि आक्रमणं न कुर्वन्ति। नागरिकवेषेण स्थिताः अस्मदीयाः सैनिकाः सर्वान् शत्रुसैनिकान् मारयन्ति ।



भवद्भिः सर्वैः एतत् स्मरणीयं यत् यदा कदापि सर्पकेतुमहाराजस्य नाम्नः उच्चारणं न करणीयम्" इति ।

दलनायकस्य वचनं यावत् न समाप्तं तावति एव काले जनसमूहतः 'महाराजः सर्पकेतुः जयतात्' इति जयघोषः समुत्पन्नः ।

समूहे स्थितः सुबाहुः एतत् सर्वम् अपि श्रुतवान् । वीरपुरस्य वशीकरणार्थम् एतादृशं कुतन्त्रं प्रचलति इति ज्ञात्वा सः आश्चर्यचकितः। सः चिन्तितवान्- "एतेषां मध्यतः कथञ्चित् पलाय्य सर्वप्रथमं वीरपुरं प्रविश्य एतस्य कुतन्त्रस्य विषये यदि अहं चन्द्रवर्माणं निवेदयेयं तर्हि अपायतः सः राजा नगरं च उन्मुक्तं भवेत् । किन्तु एते यथा न जानीयुः तथा कथम् अहं वीरपुरं प्राप्नुयाम् ?" इति परिहारम् अजानन् सः बहु खिन्नः ।

एवं सुबाहुः गाढम् आलोचयन् आसीत् । अत्रान्तरे जनसमूहः महाप्रवाहः इव अग्रे प्रस्थितः । नागरिकवेषधारिणः सर्पकेतोः सैनिकाः जनानां मध्ये तत्र तत्र दृश्यन्ते स्म ।

सर्वेषां पुरतः ये शतं जनाः धावन्तः आसन् तेषु सुबाहुः अपि प्रविष्टवान् । अल्पे एव काले ते शतं जनाः नगरद्वारसमीपम् आगतवन्तः । अन्ये जनाः तेषां पृष्ठतः एव आगच्छन्तः आसन् ।

एते द्वारसमीपे आक्रोशनम् आरब्धवन्तः- 'अये महानुभावाः! द्वारम् उद्घाटयन्तु । सर्पकेतुसैनिकाः अस्माकं ग्रामस्य उपरि आक्रमणं कृतवन्तः । सर्वस्वम् अपहृतवन्तः च । ते

जनान् बहुधा पीडयन्तः सन्ति। सद्यः एव महाराजं निवेदयन्तु। सैनिकान् साहाय्यार्थं प्रेषयन्तु। साहाय्यं कुर्वन्तु. . .' इति।

द्वारम् उद्घाटनीयम् वा न वा? इति द्वारपालकाः संशयापन्नाः आसन्। तदा शोकम् अभिनयन्तः एते ग्रामीणाः पुनः आक्रोशनं कृतवन्तः- "भो भोः, वयं सूर्यवर्माणं सर्वं निवेदयितुम् इच्छामः। मुखतः निवेदयितुं कृपया अवकाशं कल्पयन्तु। शीघ्रं द्वारम् उद्घाटयन्तु" इति।

तत्क्षणे एव द्वारम् उद्घाटितम्। तदा आक्रोशनरताः जनाः पार्श्वयोः स्थितवन्तः। एतन्मध्ये नागरिकवेषेण स्थिताः सैनिकाः स्वकीयानि खड्गानि आकृष्य रक्षकभटानाम् उपरि आक्रमणं कृतवन्तः। कांश्चन सैनिकान् मारितवन्तः, पुनः कांश्चन बन्धितवन्तः च। ग्रामीणाः तु कोलाहलं कुर्वन्तः वेगेन अग्रे गताः।

सुबाहुः सर्वशक्तिं प्रयुज्य एकवारम् उत्प्लुतवान्। द्वारं लङ्घितवान् च। तदा पृष्ठतः कोलाहलः श्रुतः- "हो हो, कः सः अग्रे धावति? सर्वैः समूहरूपेण एव गन्तव्यम्। तं गृह्णन्तु तावत्" इति।

अपरक्षणे एव सर्पकेतुसैनिकाः "भो भोः, तिष्ठतु, तिष्ठतु" इति वदन्तः सुबाहोः पृष्ठतः धावन्तः आगतवन्तः।

सुबाहुः निश्चितवान् यत्-मम मृत्युः सन्निहितः अस्ति। एषः च परीक्षाकालः इति। अतः सः पृष्ठतः परिवृत्य समीपम् आगतं कञ्चित् सैनिकं पादप्रहारेण ताडितवान्। प्रहारेण त्रस्तः सः यदा अधः पतितवान् तदा सुबाहुः तदीयं खड्गम् आकृष्टवान्। तावति काले अन्यः सैनिकः तत्र आगतः। सुबाहुः तस्य वक्षःस्थले खड्गेन प्रहारं दत्तवान्। अत्रान्तरे बहवः सैनिकाः समीपम् आगताः। एतत् दृष्ट्वा सुबाहुः झटिति पृष्ठतः परिवृत्य वेगेन राजभवनं प्रति धावितवान्।

(अनुवर्तते)






# अन्धविश्वासः

"त्रिविक्रमस्य पीडां निवारयितुं कीदृशी कथा वक्तव्या, कथं वा समस्या उद्भावनीया" इति शवान्तर्गतः वेतालः यावत् चिन्तयन् आसीत् तावति काले त्रिविक्रमः यथापूर्वं वृक्षस्य समीपम् आगतवान्। वृक्षम् आरुह्य शवं स्कन्धे आरोप्य वृक्षतः अधः आगतवान्। अनन्तरं मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत्-"राजन्! अस्मिन् अर्धरात्रे भयङ्करे श्मशाने भवान् यत् परिश्रमं कुर्वन् अस्ति तत्र किमपि अलौकिकं कारणं स्यादेव। अन्यथा भवान् किमर्थं वा निरन्तरं प्रयत्नं करोति? तदस्तु नाम। साहसेन श्रद्धया च ये कार्यं कुर्वन्ति ते सर्वे साफल्यं प्राप्नुवन्ति इति निश्चयः नास्ति। साफल्यकारीणि विघ्नकारीणि च कानिचन अन्यकारणानि भवन्ति एव। अत्र उदाहरणरूपेण लक्ष्मीधर-नामकस्य कस्यचित् वणिजः कथां श्रावयामि।

## वेतालकथा



मार्गायासनिवारणार्थं कथां सश्रद्धं शृणोतु तावत्'' इति।

एवं वदता वेतालेन कथा आरब्धा-'लक्ष्मीधरः नाम वणिक् महत् मूलधनं नियोज्य नौकाद्वारा विदेशेभ्यः वस्तूनि प्रेषयति स्म। एतेन वाणिज्येन सः लक्षशः रूप्यकाणि सम्पादितवान्। किन्तु कदाचित् दौर्भाग्येन महतीं हानिम् अनुभूतवान्। समुद्रचोराः समुद्रे आक्रमणं कृत्वा सर्वं लुण्ठितवन्तः आसन्।

हानिवार्तां श्रुत्वा लक्ष्मीधरं सान्त्वयितुं कश्चित् स्नेहितः तदीयं गृहम् आगतवान्। सः लक्ष्मीधरस्य अङ्गुल्यां विद्यमानम् अङ्गुलीयकं कुतूहलेन पश्यन् आसीत्। अनन्तरं सः पृष्टवान्- ''मित्र! रत्नखचितम् एतत् अङ्गुलीयकं कदा स्वीकृतवान्?''

''सद्यः एव एतत् अङ्गुलीयकं क्रीतं मया। अङ्गुलीयकं कुतूहलेन पश्यन् प्रश्नं पृष्टवान् किल? एतत् किमर्थं? प्रश्नस्य उद्देशः कः?'' इति पृष्टवान् लक्ष्मीधरः।

''भाग्यकारकं भवतु इति उद्देशेन तु एतत् अङ्गुलीयकं न कारितवान् किल? सुन्दरं दृश्यते इति कारणेन केवलं क्रीतवान् स्यात् किल'' इति स्नेहितः पृष्टवान्।

''एतस्य धारणेन मम किमपि विशेषप्रयोजनं भवेत् इति दृष्ट्या तु मया एतत् न क्रीतम्। रत्नं रमणीयम् आसीत् इति कृत्वा तत् क्रीतवान्। अस्मिन् सन्दर्भे आत्मीयेन भवता धैर्यवचनानि वक्तव्यानि आसन्। भवान् तु विचित्रप्रश्नान् पृच्छन् अस्ति किल!'' इति उक्तवान् लक्ष्मीधरः।

''एतस्य रत्नस्य कारणतः एव भवान् वाणिज्ये हानिम् अनुभूतवान् इत्यत्र तु संशयः एव नास्ति। धनिकाः अङ्गुलीयकेषु किमर्थं वा रत्नं योजयन्ति इति भवान् जानाति एव। रत्नानां प्रभावः विलक्षणः। विभिन्नवर्णेषु विद्यमानेषु रत्नेषु नवप्रकाराः सन्ति। जन्मपत्रिकायाः अनुसारं योगायोगं परीक्ष्य रत्नं स्वीकरणीयम्। अन्यथा विपरीतः परिणामः भविष्यति एव'' इति उक्त्वा

lक्ष्मीधरस्य स्नेहितः ततः निर्गतः।

मित्रस्य वचनानां श्रवणेन लक्ष्मीधरस्य मनसि इदानीं वस्तुतः संशयः उत्पन्नः। सः स्वपरिचितानां वज्रवणिजां समीपं गत्वा एतद्विषये पृष्टवान्। ते सर्वे उक्तवन्तः- "लक्ष्मीधर! एकैकस्य कृते एकैकं रत्नं भाग्यदायकं भविष्यति। अतः रत्नानि परीक्ष्य स्वीकरणीयानि" इति।

इदानीं लक्ष्मीधरस्य सन्देहः भयरूपेण परिवृत्तः। पार्श्वग्रामे अमूल्यरत्नानां वणिक् सोमशेखरः इति कश्चित् आसीत्। सः रत्नपरीक्षायाम् अतीव समर्थः इति ख्यातः आसीत्। अतः लक्ष्मीधरः एकस्मिन् दिने सोमशेखरस्य समीपं गतवान्।



सोमशेखरः लक्ष्मीधरस्य वचनानि अवधानपूर्वकं श्रुतवान्। अनन्तरं लक्ष्मीधरस्य अङ्गुल्यां विद्यमानं रत्नं सन्दंशिकासाहाय्येन जागरूकतया निष्कास्य तत् अवकरकण्डोले क्षिप्तवान्। अनन्तरं लक्ष्मीधरस्य नाम-जन्मनक्षत्रादिकं विचार्य अङ्गुलीभिः गणयन् पार्श्वे स्थितां काञ्चित् मञ्जूषाम् उद्घाटितवान्।

मञ्जूषातः नीलवर्णीयम् एकं रत्नं निष्कास्य तत् लक्ष्मीधरस्य अङ्गुलीयके कुशलतापूर्वकं योजितवान्। अनन्तरम् अङ्गुलीयकं प्रत्यर्पयन् उक्तवान् च- "महोदय! एतत् रत्नं विशेषभाग्यदायकम्। एतत् भवता सर्वदा धरणीयम्। क्रमशः एतस्य प्रभावं भवान् ज्ञातुं शक्नोति। वस्तुतः एतस्य मूल्यम् अत्यधिकम्। किन्तु वाणिज्ये भवता महती हानिः अनुभूता इति अहं जानामि। अतः भवतः कृते एतस्य मूल्यं न्यूनीकुर्वन् अस्मि। केवलम् सहस्रं रूप्यकाणि ददातु, पर्याप्तम्" इति।

लक्ष्मीधरः सहस्रं रूप्यकाणि सोमशेखरस्य हस्ते दत्तवान्, स्वगृहं प्रत्यागतवान् च।

केषाञ्चित् दिनानाम् अनन्तरं लक्ष्मीधरः सोमशेखरस्य आपणं गतवान्। मन्दहासपूर्वकं स्वागतीकुर्वन् सोमशेखरः पृष्टवान्- "महाभाग! नीलरत्नस्य प्रभावः कथम् अस्ति?" इति।

"सत्प्रभावः तु कोऽपि न दृष्टः। किन्तु वाणिज्ये अहं पुनः अपि हानिम् अनुभूतवान्"



इति उत्तरं दत्तवान् लक्ष्मीधरः ।

"हानिः अनुभूता वा? केन रूपेण एवं जातम् इति कृपया सविवरणं वदतु तावत्" इति उक्तवान् सोमशेखरः ।

लक्ष्मीधरः उदासीनभावनया उक्तवान्- "किं वदामि भोः! वस्तुभिः पूर्णाः चतस्रः महानौकाः मया वाणिज्यार्थं प्रेषिताः आसन्। तासु एका नौका चण्डमारुतपीडिता जले निमग्ना। सामान्यतः पञ्चलक्षरूप्यकात्मिका हानिः मया अनुभूता" इति।

तदा सोमशेखरः मन्दं हसन् पृष्टवान्-"एतस्य तात्पर्यं यत् तिस्रः नौकाः सुरक्षितरूपेण तीरं प्राप्तवत्यः इति किल?" इति।

"आम्, तत् तु सत्यम्" इति उक्तवान् लक्ष्मीधरः ।

"मया नीलवर्णस्य रत्नं दत्तं किल? तस्य प्रभावेण भवतः हितम् एव सिद्धम्। पश्यतु, प्रेषितासु चतसृषु नौकासु तिस्रः नौकाः सुरक्षितं तीरं प्राप्तवत्यः। नीलरत्नस्य प्रभावेण एव एवं जातम्। अन्यथा चतस्रः नौकाः अपि जले मज्जिताः अभविष्यन्। भवान् च भिक्षुकः अभविष्यत्" इति सोमशेखरः सगर्वम् उक्तवान्।

एतत् श्रुत्वा लक्ष्मीधरः क्षणकालं मौनं स्थितवान्। अनन्तरं अङ्गुलीयकं निष्कास्य सोमशेखरस्य हस्ते दत्त्वा सः स्वगृहं प्रतिगतवान् च।

वेतालः एवं कथां समाप्य अवदत्- "राजन्! नीलरत्नस्य कारणतः तिस्रः नौकाः सुरक्षितं तीरं प्राप्ताः। एतद्विषयं सोमशेखरः लक्ष्मीधराय स्पष्टं निवेदितवान् अस्ति। तथापि लक्ष्मीधरः एतत् अङ्गीकर्तुं प्रयत्नम् एव न कृतवान्। एतत्कारणतः सः कदाचित् वाणिज्ये महतीं हानिम् अनुभवेत् अपि। लक्ष्मीधरः अज्ञानेन एव रत्नखचितं तत् अङ्गुलीयकं सोमशेखरस्य हस्ते दत्तवान् वा? एतस्य सन्देहस्य परिहारोपायं जानन् अपि यदि न वदति तर्हि भवतः शिरः सहस्रधा भग्नं भविष्यति" इति।

तदा त्रिविक्रमः उक्तवान्- "लक्ष्मीधरः प्रथमम् अलङ्कारार्थम् अङ्गुलीयकं धृतवान्।

तदा सः न जानाति स्म यत् अङ्गुलीयकें योजितं रत्नं विशेषप्रभावशालि भवति इति केचन विश्वसन्ति इति। किन्तु तदीयः स्नेहितः रत्ने अलौकिकं प्रभावम् आरोपयन् लक्ष्मीधरस्य मनसि भ्रमम् उत्पादितवान्। समुद्रेषु तरङ्गाः सहजाः। एतदपि स्वाभाविकम् एव यत् चण्डमारुतेन पीडितासु नौकासु काश्चन जले मज्जेरन्, काश्चन सुरक्षितं तीरं प्राप्येरन्।

सोमशेखरः कश्चित् समर्थः वणिक्। ये रत्नस्य प्रभावविषये विश्वासं स्थापयन्ति ते एव तत्समीपम् आगच्छन्ति इति सः सम्यक् जानाति स्म एव। सः स्वबुद्धिकौशलेन तर्कबलेन च जनानां अन्धविश्वासं पोषयति स्म। 'रत्नकारणतः एव एकस्यां नौकायां जले निमग्नायाम् अपि, तिस्रः नौकाः सुरक्षितं तीरं प्राप्तवत्यः' इति भावनां लक्ष्मीधरस्य मनसि स्थापयितुं सोमशेखरः प्रयत्नं कृतवान्। लक्ष्मी-धरः एतं कुतर्कं ज्ञातवान् एव।

सः चिन्तितवान्- "पुनः कदाचित् सर्वनाशः जातः चेदपि सोमशेखरः वदेत्- कालप्रभावतः नीलरत्नस्य प्रभावः नष्टः, अन्यत् रत्नं क्रीणातु इति। अनर्थस्य मूल-कारणम् अङ्गुलीयकस्य धारणम् एव" इति।

यदा लक्ष्मीधरेण अङ्गुलीयकं धृतं तदा स्नेहितः आगत्य अन्धविश्वासस्य बीजम् आरोपितवान्। आत्मविश्वासेन विरहितः मानवः कस्यचित् अन्धविश्वासस्य अधीनः भविष्यति। एतत्कारणतः सर्वनाशः अपि सम्भवेत्। एतत् ज्ञात्वा अपि अन्धविश्वासः यदि न दूरीक्रियते तर्हि बहवः अनर्थाः अनपेक्षितसमस्याः च उद्भवेयुः। एतत्सर्वं विचिन्त्य एव लक्ष्मीधरः सोमशेखरस्य हस्ते अङ्गुलीयकं समर्पितवान्। एवं च लक्ष्मीधरः न अज्ञानी, अपि तु विशेषज्ञानी"।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः वेतालः शवसहितः अदृश्यः भूत्वा वृक्षस्य शाखाम् अवलम्बितवान्।






# व्यवहारकौशलम्

पूर्वं भद्रशीलः नाम कश्चित् धर्मज्ञानी आसीत्। सः ग्रामेषु सञ्चरन् सरलया शैल्या सत्यस्य धर्मस्य च विषये जनान् उपदिशति स्म। तस्य उद्बोधकम् एतम् उपन्यासं श्रोतुं जनाः अपि अधिकसङ्ख्यया सम्मिलन्ति स्म।

भद्रशीलस्य द्वौ शिष्यौ- कङ्कणः लोहकः च इति। वार्धक्यकारणतः भद्रशीलः तदा तदा अस्वस्थः भवति स्म। तत्सन्दर्भे सः उपन्यासभारं कङ्कणे निक्षिपति स्म। कङ्कणः गुरुः इव उपन्यासे समर्थः। कङ्कणः उपन्याससमये गुरुः इव सुन्दराणि उदाहरणानि यच्छति। मध्ये मध्ये च गम्भीरं विषयम् अपि किञ्चित् निरूपयति। तथापि कुत्रापि कठिनशैलीं न आश्रयति। नीरसविषयं न स्पृशति। धर्मशास्त्रे निरूपितान् विषयान् सारूपेण कथयति, न तु वाक्यार्थरूपेण। विषयविवरणार्थं कदाचित् लघुकथाः अपि कथयति स्म।

"गुरुः उपन्यासार्थं मम कृते कदापि अवकाशं न ददाति किल!" इति लोहकः बहुधा खिद्यति स्म।

एकदा लोहकः गुरुं पृष्टवान्- "गुरुवर्य! उपन्यासार्थं भवान् मम कृते एकवारम् अपि अवकाशं न दत्तवान्। एतस्य किं कारणम्? धर्मशास्त्रविषये मम ज्ञानम् अपूर्णं वा? अथवा भवतः सेवायां मया कोऽपि लोपः आचरितः वा? कङ्कणविषयकपक्षपातेन अपि भवान् एवम् आचरितवान् स्यात्। अहं वास्तविकं कारणं ज्ञातुम् इच्छामि। कृपया तत् निवेदयतु, येन अहं मदीयं दोषं निवारयितुं शक्नोमि" इति।

भद्रशीलः मन्दं हसन् उक्तवान्- "धर्मशास्त्रविषये भवतः विशेषपाण्डित्यम् अस्ति इति अहं जानामि। वस्तुतः एतद्विषये भवान्

यावत् जानाति तावत् कङ्कणः न जानाति" इति।

गुरुवर्यस्य एतद्वचनेन लोहकः बहु सन्तुष्टः। भद्रशीलः अग्रे उक्तवान्- "सामान्याः जनाः अपि यथा सुलभतया जानीयुः तथा सरलशैल्या धर्मशास्त्रविषयाः बोधनीयाः। अन्यथा जनाः विपरीतम् अर्थं कल्पयन्तः विरुद्धाचरणं कुर्युः। भवान् तु सूक्ष्मविवेचने सिद्धहस्तः। अतः भवान् उत्तमः विमर्शकः व्याख्याकारः च भवितुम् अर्हति इति मम आशयः। अतः एव उपन्यासार्थम् अवकाशं न दत्तवान्" इति।

तदा लोहकः खिन्नः सन् उक्तवान्- "आचार्य ! कदाचित् अपि अवकाशम् अदत्त्वा मद्विषये एवं निर्णयं स्वीकृतवान् किल भवान् ! एतत् मम दौर्भाग्यम्" इति।

भद्रशीलः किञ्चित् विचार्य उक्तवान्- "अस्तु नाम, भवतः मनसि विद्यमानम् अन्यथाभावं निवारयितुम् अहम् एकम् अवकाशं कल्पयामि। अद्य रात्रौ शिवपुरे ईश्वरमन्दिरे मम भाषणम् अस्ति। अहं कण्ठदोषव्याजेन तूष्णीम् उपविशामि। भवान् एव अद्य भाषणं करोतु तावत्" इति।

आचार्यस्य वचनेन लोहकः बहु सन्तुष्टः। तद्दिने सायङ्काले सः आचार्येण सह शिवपुरं गतवान्। तत्र ईश्वरमन्दिरे ग्रामवासिनां पुरतः स्थित्वा भाषणम् आरब्धवान् च।

'धनमूलम् इदं जगत्' इत्येतं विषयं खण्डयन् सः विषयप्रस्तावं कृतवान्।



"सुखपूर्वकजीवने धनं प्रधानकारणं न" इति एकघण्टां यावत् निरन्तरं भाषणं प्रवृत्तम्। तस्य भाषणे न केवलं ग्रामीणाः, भद्रशीलः अपि अस्वारस्यम् अनुभूतवान् ।

अनन्तरं लोहकः एकक्षणं मौनं स्थित्वा पुनः जनान् उद्दिश्य उक्तवान्- "धनेन सर्वम् साधयितुं न शक्यते इत्येषः अंशः सर्वैः सम्यक् ज्ञातः स्यात् किल ?" इति ।

"आम्, आम् । सम्यक् ज्ञातम्" इति वदन्तः जनाः 'भाषणं समापयतु' इति भावं प्रकटयन्तः करताडनं कर्तुम् आरब्धवन्तः ।

एतत् अविगणयन् लोहकः उत्साहेन वक्तुम् आरब्धवान्- "धनेन किं वयं सन्तोषं क्रेतुं शक्नुमः वा? प्रेमभावस्य मूल्याङ्कनं किं शक्यं वा ?" इति। समीपे उपविष्टं कञ्चित् बालकम् उत्थाप्य पृष्टवान् च- "बालक! सहस्रं रूप्यकाणि दत्त्वा 'मातापित्रोः निन्दां करोतु' इति अहं वदामि चेत् किं भवान् तथा कर्तुं शक्नोति ?" इति ।

बालकः 'किं वक्तव्यम्' इति अजानन् तूष्णीं स्थितवान् । तदा पार्श्वे स्थितः एकः ज्येष्ठः उत्थाय उक्तवान्- "यदि मातुलविषये जुगुप्सा प्रदर्शनीया इति भवान् वदति तर्हि अहं निश्चयेन तथा करोमि । तदर्थं कियत् धनं ददाति भवान् ?" इति ।

एतत् श्रुत्वा सभायां स्थिताः सर्वे उच्चैः हसितवन्तः । एकैकशः उत्थाय गतवन्तः च । लोहकः तु स्तम्भवत् स्थितवान् ।

तदा भद्रशीलः तदीयस्कन्धस्य उपरि हस्तं स्थापयन् उक्तवान्- "पुत्र लोहक! भाषणार्थं किमर्थम् अवकाशः न दत्तः आसीत् इति भवान् ज्ञातवान् किल इदानीम्? भवतः विषये मया यत् चिन्तितम् आसीत् तथैव प्रवृत्तम्" इति।

लोहकः शिरः अवनमय्य मौनं स्थितवान् । एतदनन्तरं सः भाषणकार्ये कदापि इच्छां न प्रकटितवान् । धर्मशास्त्रग्रन्थानां व्याख्यानानि लिखन् सः कालान्तरे प्रसिद्धः जातः ।





# हासकारणम्

बहुवर्षेभ्यः पूर्वं शिवपुरं स्वर्णपुरम् इति राज्यद्वयम् आसीत्। तयोः राज्ययोः मध्ये चिरकालतः परस्परं द्वेषः आसीत्। द्वयोः राज्ययोः बलपराक्रमाः तु समाना एव आसन्।

गच्छता कालेन स्वर्णपुरम् आर्थिकदृष्ट्या बलहीनं जातम्। तस्य फलरूपेण सेनाशक्तेः अपि ह्रासः अभवत्। तदा स्वर्णपुरस्य महाराजः विष्णुसेनः चिन्तामग्नः। शिवपुरतः राज्यस्य उपरि आक्रमणं भवेत् इति तस्य भीतिः।

शिवपुरस्य महाराजः शिवसेनः। तस्य विवाहयोग्यः पुत्रः आसीत्। विष्णुसेनस्य रत्नमञ्जरी इति एका रूपवती पुत्री। स्वपुत्रीं शिवसेनस्य पुत्राय दत्वा विवाहं कारयामि चेत् युद्धस्य अपायः एव नास्ति। एवं रीत्या आलोचयन् विष्णुसेनः 'आवां बान्धवौ भवावः' इति सन्देशं दूतद्वारा शिवसेनं प्रति प्रेषितवान्। किन्तु ततः पूर्वम् एव शिवसेनस्य कुमारः विजयः रत्नमञ्जर्याः अनुपमसौन्दर्यवार्तां श्रुत्वा तां प्राप्तुम् अतीव उत्कण्ठितः एव आसीत्। पुत्रस्य आशां शिवसेनः अपि जानाति स्म। अतः विष्णुसेनस्य सन्देशं श्रुत्वा हृष्टः शिवसेनः विवाहस्य अनुमतिं दत्तवान्।

विवाहसम्बन्धिनां विषयानां विचारणार्थं शिवसेनः एकं भोजनसमारम्भं परिकल्पितवान्। समारम्भार्थं विष्णुसेनः, तस्य पत्नी जयन्तीदेवी पुत्री रत्नमञ्जरी च समागतवन्तः।

भोजनसमारम्भस्य आरम्भः अभवत्। दासीजनाः विविधानि भक्ष्याणि आनीय आनीय परिवेषयन्ति स्म। तस्मिन् समये मालती इति एका दासी भक्ष्याणि परिवेषयन्ती सहसा हसितवती। तस्याः हासस्य शब्दं श्रुत्वा तत्र उपस्थिताः सर्वे स्तब्धाः जाताः। तेषु एकैकस्य अपि स्तम्भनकारणम् एकैकं आसीत्।

शिवसेनः स्वपत्न्या सह वादविवादं

''श्रीमाता''



इदानीं बन्धुत्वं प्राप्तुम् आगतवान् अस्मि अहम्। कथञ्चित् सा दासी एतं विषयं ज्ञात्वा हसितवती स्यात् इति चिन्तयतः विष्णुसेनस्य मुखं वर्णहीनं जातम्। विष्णुसेनस्य पत्न्याः जयन्तीदेव्याः मस्तके केचन श्वेतकेशाः आसन्। तेषां गोपनार्थं सा प्रतिदिनं कृष्णवर्णलेपनं करोति स्म। अद्य समारम्भार्थम् आगमनसमये त्वरया अलङ्करणं कृतवती। समीचीनतया कृष्णवर्णस्य लेपनार्थं समयः न आसीत्। अतः स्वीयकेशानां अव्यवस्थां दृष्ट्वा सा तथा हसितवती इति तस्याः महती लज्जा अभवत्।

राजकुमार्याः रत्नमञ्जर्याः स्तम्भनस्य कारणं अन्यत् आसीत्। सा राजकुमारं विजयं चौर्येण पुनः पुनः पश्यति स्म। तत् दृष्ट्वा एव दासी हसितवती इति सा रत्नमञ्जरी मुखं अन्यत्र परिवर्त्य स्थितवती।

राजकुमारः विजयः अपि स्तब्धवान्। सः राजकुमार्या सह एकान्ते वार्तालापं कर्तुम् इच्छन्, तदर्थं दूतरूपेण एकं मित्रं प्रेषयितुम् अवकाशं निरीक्षमाणः आसीत्। एतं वृत्तान्तं ज्ञात्वा एव दासी हसितवती वा?

शिवसेनस्य सचिवः सुधर्मा अतीव बुद्धिमान् आसीत्। यदा मालती हसितवती, तदा तस्याः हासप्रभावेण तेषु सर्वेषु युगपत् जातं स्तम्भनं सः दृष्टवान्। तत्र एकैकस्य अपि भिन्नं भिन्नं स्वीयमनोभावजातं कारणं स्यात्। दास्याः हासस्य

करोति स्म- विवाहकाले विष्णुसेनतः उपायनरूपेण कानि कानि वस्तूनि लब्धानि भवेयुः इति। "एतावती सम्पत्तिः अस्ति। तथापि महाराजस्य ईदृशी दुराशा वा? इति चिन्तयित्वा दासी हसितवती" इति शिवसेनः तर्कितवान्।

शिवसेनस्य पत्नी शारदादेवी। तस्याः समीचीना वाक्शुद्धिः न आसीत्। अतः सा जनानां वार्तालापमध्ये अप्रविश्य मौनं इतः ततः चलति स्म। एतं विषयं स्मृत्वा मालती हसितवती इति तस्याः भावना अभवत्।

विष्णुसेनस्य चिन्ता अन्या आसीत्। शिवसेनः बलिष्ठः। अतः युद्धस्य अपायः अस्ति एव। तादृशयुद्धकाले बलहीनः अहं नूनं पराजयं प्राप्स्यामि एव। तत् निवारयितुं

तु यथार्थकारणम् अन्यत् एव स्यात् इति सः तर्कितवान् ।

किञ्चित्कालानन्तरं भोजनसमारम्भः समाप्तः । सुधर्मा मालतीं स्वसमीपं आहूय "किं भोः, परिवेषणसमये अकस्मात् भवत्याः हसनस्य कारणं किम् ?" इति पृष्टवान् ।

तस्मिन् समये सर्वे तत्रैव आसन् । मदीयं विषयम् एव सा वदेत् इति एकैकः अपि भीतः भूत्वा ताम् उग्रदृष्ट्या पश्यति स्म । किन्तु मालती सङ्कोचेन कारणं वक्तुम् अनिच्छन्ती तूष्णीम् एव स्थितवती ।

तदा सुधर्मा "पश्यतु मालती, भवती तूष्णीं तिष्ठति चेत्, अत्र उपस्थिताः सर्वे भिन्नं भिन्नं अनुचितं च कारणं चिन्तयेयुः । अहं तु एवं तर्कयामि यत्, भवती यत्किञ्चित् स्वीयं विषयं स्मृत्वा तथा सहसा हसितवती इति । भोजनार्थं आगतान् जनान् दृष्ट्वा हसितुं दास्याः भवत्याः धैर्यं कदापि न स्यात् । अतः यथार्थकारणं वदतु" इति उक्तवान् ।

मालती लज्जया अवनतमुखी भूत्वा- "भवतः कल्पना यथार्था एव अस्ति प्रभो ! मम भर्ता अतीव विस्मरणशीलः । नूतनकङ्कणानि आनयतु इति बहुदिनेभ्यः वदन्ती अस्मि । एषः पुन पुनः विस्मरति । अतः केवलं वचनेन प्रयोजनं नास्ति इति चिन्तयित्वा, अद्य अहं मम पुरातनानि चत्वारि कङ्कणानि स्मारणार्थं तस्य हस्ते धारितवती । तथापि सः अद्यापि विस्मृतवान् । एवं हस्ते स्थितानि कङ्कणानि अपि विस्मृत्य, कङ्कणसहितः एव अत्र आगतवान् अस्ति" इति उक्त्वा तत्रैव स्थितं स्वपतिं मल्लं दृष्ट्वा पुनः हसनं यथाकथञ्चित् निवारयन्ती मुखं स्वहस्तेन पिहितवती ।

मल्लस्य हस्ते कङ्कणानि दृष्ट्वा, दास्याः मालत्याः वचनानि श्रुत्वा च तस्याः हासस्य कारणं सर्वे ज्ञातवन्तः । तेन सर्वेषां संशयाः परिहृताः । ते सर्वे निर्मलचित्ताः जाताः । तदा ते सर्वे युगपत् सन्तोषेण हसितवन्तः । इदानीं तेषां हसनं निर्मलम् आसीत् ।





# विश्वासघातुकः

ब्रह्मदत्तः काशीराज्यं परिपालयन् आसीत्। तेषु दिनेषु कदाचित् पञ्चशतं वणिजः नौकाम् आरुह्य वाणिज्यार्थम् अन्यदेशं प्रति प्रस्थिताः। किन्तु दौर्भाग्यवशात् सा नौका जले निमग्ना। तत्सन्दर्भे एकः एव सजीवं स्थितः। अन्ये सर्वे तिमिङ्गिलानां आहाराः जाताः। यः सजीवं स्थितः सः समुद्रे तरन् करम्भिका-नामकं नगरं प्राप्तवान्। उदरपोषणार्थं मार्गान्तरम् अजानन् सः भिक्षया जीवनम् कर्तुम् आरब्धवान्।

तदीयां दुस्थितिं ज्ञात्वा नागरिकाः अनेकप्रकारकाणि वस्तूनि दत्तवन्तः। किन्तु एषः तत्सर्वं निराकुर्वन् उक्तवान्- "एतानि वस्तूनि मम किमर्थम्? मम तु जीवितुम् आहारः धर्तुं वस्त्राणि विहाय किमपि नापेक्षितम्" इति।

तदा जनाः चिन्तितवन्तः- 'एषः कश्चित् निरपेक्षः तपस्वी स्यात्" इति। अतः ते समूहप्रयत्नेन एकं कुटीरं निर्मितवन्तः। तत्र स्थातुम् एतं प्रार्थितवन्तः च।

एषः तत् अङ्गीकृतवान्। आत्मनः नाम करम्भकमहामुनिः इति प्रचारं कृतवान्। अल्पे एव काले जनानाम् आदरं प्राप्तवान् च। करम्भकस्य जनप्रियतया प्रभावितः महाराजः अपि तदा तदा एतस्य दर्शनार्थम् आगच्छति स्म।

तेषु एव दिनेषु पुण्डरीकः सर्पराजरूपेण जन्म प्राप्तवान् आसीत्। बोधिसत्त्वः च गरुडानां राजरूपेण। एतौ द्वौ अपि करम्भकस्य सखायौ सञ्जातौ।

कदाचित् गरुडराजः आगत्य करम्भकं नमस्कृत्य तस्य समीपे उपविशन् उक्तवान्- "स्वामिन्! गरुडानां सर्पाणां च मध्ये तदा तदा युद्धं प्रचलति। एतेषु युद्धेषु गरुडानाम् एव मरणम् अधिकम्। एतेन स्पष्टं ज्ञायते यत्

"जातककथा"

गरुडाः सर्पान् सम्यक् ग्रहीतुं न जानन्ति इति। तेषां ग्रहणे कोऽपि रहस्योपायः अस्ति। वयं तं न जानीमः। अतः भवान् कथञ्चित् तम् उपायं ज्ञात्वा मां निवेदयतु। भवान् तु सर्पाणाम् अपि मित्रं किल?" इति।

करम्भकः गरुडराजस्य वचनम् अङ्गीकृतवान्। तदा गरुडराजः सन्तुष्टः सन् ततः निर्गतः।



पुनः कदाचित् सर्पराजः करम्भकं द्रष्टुम् आगतवान्। तदा करम्भकः पृष्टवान्- "सर्पराज! मया श्रुतम् यत् गरुडैः सह भवतां युद्धे गरुडाः एव अधिकसङ्ख्यया मृताः भवन्ति इति। एतस्य किं कारणम्? यदा गरुडाः भवतः गृह्णन्ति तदा ते केन वा कारणेन पराजिताः भवन्ति?" इति।

तदा सर्पराजः विनयपूर्वकम् उक्तवान्- "स्वामिन्! अत्र एकं रहस्यम् अस्ति। यदि अहं तत् रहस्यं भवन्तं निवेदयामि तर्हि अहं जातिद्रोही भविष्यामि। तेन रहस्येन एव अस्मदीयाः अपायात् मुक्ताः सन्ति। अतः 'तत् रहस्यं वदतु' इति कृपया अनुरोधं न करोतु" इति।

"अहं गरुडजातीयान् [illegible] रहस्यं वदामि इति भवतः भीतिः वा? एवं कदापि न भविष्यति। अहं तावान् नीचः न। अहं केवलं कुतूहलेन एतत् पृच्छन् अस्मि। तस्य रहस्यस्य कथनेन भवतः जातेः अहितं किमपि न भविष्यति" इति करम्भकः उक्तवान्।

"पुनः कदाचित् वदेयम्, इदानीं न" इति उक्त्वा सर्पराजः ततः निर्गतः। पुनः यदा सर्पराजः करम्भकेण मेलितुम् आगतः तदा करम्भकः एतत् विषयं स्मारितवान्। किन्तु सर्पराजः मौनम् आश्रितवान्। यदा पुनरपि सर्पराजः तं द्रष्टुम् आगतवान् तदा सः सर्पराजं उक्तवान्- "अहं भवन्तं तृतीयवारम् एतद्विषये पृच्छन् अस्मि। तथापि भवान् तत् रहस्यं न उक्तवान्" इति।

सर्पराजः सङ्कोचम् अनुभवन् उक्तवान्- "महानुभाव! भवान् कदाचित् अस्माकं रहस्यं प्रकटीकुर्यात् इति मम भीतिः" इति।



''तत् रहस्यं कदापि अन्यस्य पुरतः न प्रकटीकरिष्यमि इति प्रतिज्ञां करोमि चेत् पर्याप्तं किल ?'' इति पृच्छन् करम्भकः तथैव प्रतिज्ञां कृतवान् ।

तदा समाधानं प्राप्तवान् सर्पराजः रहस्यम् उद्घाटितवान्- ''महानुभाव ! श्रृणोतु तावत् । वयं बहून् शिलाखण्डान् गिलित्वा भूमौ शयिताः भवामः। गरुडाः यदा आक्रमणं कुर्वन्ति तदा मुखम् उद्घाटय फूत्कारं कुर्मः । गरुडाः तु अस्मान् गले गृहीत्वा उड्डयनं कुर्वन्ति । अस्माकं शरीरस्य भारं वोढुम् असमर्थाः ते अल्पेन एव उड्डयनेन श्रान्ताः भवन्ति । तेनैव कारणेन पराजयं प्राप्नुवन्ति अपि । मूर्खाः गरुडाः गले ग्रहणापेक्षया यदि पुच्छे गृह्णीरन् तर्हि अस्माभिः गिलिताः शिलाखण्डाः मुखमार्गेण अधः अपतिष्यन्, अस्मदीयानि शरीराणि लघुभूतानि अभविष्यन् । तदा तु ते सुलभतया अस्मान् गृहीत्वा गन्तुं शक्ताः अभविष्यन् । एतदेव अस्माकं रहस्यम् । एतत् अजानन्तः गरुडाः सर्वदा स्वप्रयत्नेषु असाफल्यं प्राप्नुवन्ति'' इति ।

सर्पराजस्य निर्गमनानन्तरं गरुडराजः तत्र आगतवान् । सः पृष्टवान्- ''महात्मन् ! भवान् सर्पाणां रहस्यं ज्ञातुं शक्तवान् वा ?''

तदा करम्भकः सर्पाणां रहस्यं गरुडराजाय निवेदितवान् । ''सर्पराजः महतीं मूर्खताम् आचरितवान् । अविवेकेन जातिद्रोहं अपि कृतवान् । अहम् इदानीम् एव गत्वा तं वशीकरोमि '' इति उक्त्वा गरुडः ततः निर्गतः । सः साक्षात् सर्पराजसमीपं गत्वा तस्य पुच्छं गृहीत्वा आकाशे उड्डयनं कृतवान् ।

इदानीं सर्पस्य मुखम् अधः जातं किल ? अतः स्वाभाविकतया तेन गिलिता शिलाखण्डाः सर्वे अधः पतिताः । तदा सर्पराजः चिन्तितवान्- ''हन्त ! मम नाशस्य कारणम् अहम् एव जातः । सः दुष्टः महामुनिः न। तस्मिन् विश्वस्तः अहं वञ्चितः । तस्मै यत् रहस्यं निवेदितवान् तेन अस्माकं जातेः एव विनाशः भविष्यति इति ।

तदा गरुडराजः उक्तवान्- ''अरे मूर्ख !

सन्यासिनः पुरतः रहस्यं उक्तवान् भवान् किमथ वा इदानीं विलपति? मृत्युः अपरिहार्यः किल? तथापि सर्वदा विवेकिभिः भाव्यम्। भवतः दुर्गतेः कारणं न अहं, न वा सः सन्यासी। अपि तु भवतः मूर्खता। सर्वेषां समीपे अपि सर्वे विषयाः न निवेदनीयाः। बान्धवाः मित्राणि च बहवः भवन्ति। सुन्दरी पत्नी अपि भवेत्। तथापि सर्वेभ्यः अपि रहस्यं गोपनीयम् एव। एवं कृते चेदेव वयं शत्रुभ्यः आत्मानं रक्षयितुं शक्नुमः'' इति।

''महात्मन्! अहं भवतः उपदेशं श्रुतवान्। यथा माता पुत्रस्य सर्वापराधान् विना कारण-विवेचनं क्षाम्यति तथा क्षाम्यतु भवान्' इति सर्पराजः दैन्यपूर्वकं प्रार्थितवान्।

''पुत्राः त्रिविधाः भवन्ति- शिष्यः, औरसः पुत्रः, पालितः पुत्रः च इति। भवान् तु मम उपदेशान् गृह्णन् शिष्यः सञ्जातः। अतः भवान् पुत्रतुल्यः। भवतः प्राणान् रक्षयामि तावत्'' इति उक्त्वा गरुडराजः सर्पराजं भूमौ अवतारितवान्। तं बन्धमुक्तं कृतवान् च।

एतदनन्तरं सर्पराजः नागलोकं गतः। गरुडराजः स्वलोकं गत्वा इतरान् गरुडान् उक्तवान्- ''मम सर्पराजस्य च मध्ये मैत्री स्थापिता अस्ति। तथापि सः मद्विषये कीदृशी भावं प्रकटयति इति अहं ज्ञातुम् इच्छामि।''

एवम् उक्त्वा गरुडराजः नागलोकं गत्वा पक्षाभ्यां चण्डमारुतम् उत्पादितवान्। तत्क्षणे



एव सर्पराजः त्वरया शिलाखण्डान् गिलितवान्। पुच्छं मध्ये स्थापयन् शरीरं कुण्डलाकारेण परिवर्त्य फूत्कारं कृतवान्।

तदा गरुडराजः उक्तवान्- "मित्र सर्पराज! भवान् एतत् किं कुर्वन् अस्ति? आवयोः मध्ये मैत्री स्थापिता किल? एवं स्थिते अपि पुनः मां मारयितुं किमर्थं प्रयत्नं करोति भवान्?" इति।

सर्पराजः उक्तवान्- "मित्र! विवेकी कस्य अपि उपरि विश्वासं न स्थापयति। भवान् तु एतावत्पर्यन्तं मम शत्रुः आसीत्। एवं स्थिते कथम् भवतः विषये विश्वासं प्रदर्शयेयम्?"

तदा गरुडराजः हसन् उक्तवान्- "भवान् मम उपदेशस्य तत्त्वं सम्यक् ज्ञातवान् अस्ति। अस्तु नाम, उत्तिष्ठतु! आवां गत्वा सन्यासिनं विवेकं पाठयामः" इति।

अनन्तरम् उभौ अपि मिलित्वा करम्भकस्य कुटीरं गतवन्तौ। सर्पराजः करम्भकं पृष्टवान्- "अहं भवतः वेषभूषादिना वञ्चितः। भवान् महातपस्वी इति अहं चिन्तितवान्, रहस्यं उक्तवान् च। भवान् तु गरुडराजाय रहस्यम् निवेद्य विश्वासघातं कृतवान्। किम् एतत् उचितम्?" इति।

"अहम् अज्ञानेन एवं न आचरितवान्। भवन्तौ मम स्नेहितौ इति तु सत्यम्। तथापि गरुडविषये मम स्नेहः अधिकः। अतः अहं भवदीयं रहस्यं गरुडाय निवेदितवान्" इति उक्तवान् करम्भकः।

"अरे दुष्ट! भवान् आत्मानं सर्वसङ्ग-परित्यागिनं वदति। तथापि पक्षपातं शत्रुतां च पोषयति। कथं वा भवान् सन्यासी भवितुं योग्यः? एवं वञ्चनापूर्णव्यवहारेण जगतः अहितं करोति भवान्। अतः भवतः शिरः शतधा छिन्नं भवतु" इति सर्पराजः शापं दत्तवान्।

अपरक्षणे एव करम्भकस्य शिरः शतधा छिन्नम्। तस्य अधः भूमिः द्विधा छिन्ना। तत्र उत्पन्ने विभेदे पतितः करम्भकः नरकलोकं प्राप्तवान्।





अस्माकं नद्यः

# नर्मदा

नर्मदानद्याः जन्मविषये काचित् कथा श्रूयते। मैकाल्पर्वतः अपूर्वाणां प्राकृतिकसौन्दर्याणां विषये प्रसिद्धः। तस्मिन् प्रदेशे मानवानां सञ्चारः नास्ति एव। सर्वदा अत्र प्रकृतिः फलपुष्पैः समेता शोभते। अत्र देवाः यक्षाः च निवसन्ति।

पूर्वं कदाचित् ईश्वरः एतं पर्वतम् आगतवान्। तत्रत्येन प्राकृतिकसौन्दर्येण आकृष्टः सः तत्र एव ध्यानमग्नः जातः। बहूनि वर्षाणि यावत् सः तपोमग्नः आसीत्। शिवस्य दिव्यस्वरूपेण आकृष्टा प्रकृतिः परवशं गता।





परमेश्वरतः उत्पन्नः अद्भुतदिव्यः तेजोराशिः अकस्मात् सुन्दरकन्यारूपेण परिवृत्तः। कन्यका एषा शिवं प्रणम्य उक्तवती- "तात! अहं सर्वदा स्वेच्छया आनन्दपूर्वकं विहारं कर्तुम् इच्छामि। तथा वरेण अनुगृह्णातु" इति।



'तथैव अस्तु' इति वदन् ईश्वरः तां नर्मदानाम्ना आहूतवान्। ततः आरभ्य एषा नर्मदा वनेषु पर्वतेषु च वनदेवीरूपेण मलयमारुतरूपेण च सानन्दं विहरन्ती आसीत्।

मृगाः मयूराः इत्यादयः वन्यप्राणिनः नर्मदायाः स्नेहिताः जाताः। तैः पशुभिः सह क्रीडन्ती सा सन्तोषेण दिनानि यापयन्ती आसीत्। तस्याः विहारेण च तस्य वनस्य शोभा प्रवृद्धा।





तत्प्रदेशे निवसन्तः देवाः नर्मदायाः सौन्दर्यं दृष्ट्वा विस्मिताः। यदा नर्मदा पशुभिः सह क्रीडति तदा देवाः सर्वे पर्वतशिखरेषु अन्तरिताः तां कुतूहलेन पश्यन्ति स्म। सा यत्र यत्र गच्छति तत्र तत्र ताम् अनुसरन्तः तस्याः चलनवलनं परिशीलयन्ति स्म च।

कतिचन दिनानि अतीतानि। 'नर्मदायाः स्नेहः सम्पादनीयः' इति तेषां अभिलाषा तीव्रा जाता। ते तस्याः समीपं प्रस्थिताः। किन्तु तेषु केनचित् सह सम्भाषणं कर्तुं, तेषु कञ्चित् परिणेतुं वा सा न इच्छति स्म। सा स्वेच्छापूर्वकजीवनम् एव अधिकम् इच्छति स्म।





देवाः तस्याः अनुसरणं न त्यक्तवन्तः। सा तु विद्युद्वेगेन सञ्चरन्ती आत्मानं रक्षति स्म। दुर्गमपर्वतेषु सञ्चरन्तः देवाः ताम् अनुसृत्य गतवन्तः। तथापि नर्मदा तेषां सामर्थ्यात् आत्मानं रक्षन्ती धावति स्म।

कदाचित् नर्मदा पर्वतेषु सञ्चरन्ती आसीत्। तदा देवाः चिन्तितवन्तः- 'यदि वयम् इदानीं नर्मदायाः अनुसरणं कुर्मः सा अस्मत्तः आत्मानं रक्षयितुं न शक्नोति एव' इति। एतेन विचारेण प्रेरिताः ते उत्साहेन अग्रे गतवन्तः। नर्मदा एकवारं देवानां आगमनं दृष्टवती पुनः पर्वतकन्दरं परिशीलितवती च। किञ्चित्कालं यावत् सा निश्चला जाता।





नर्मदा अकस्मात् नदीरूपेण परिवृत्ता पर्वतेषु वहन्ती अग्रे गतवती। देवाः असहायाः पश्यन्तः आसन्। नर्मदा नदीरूपेण सर्वत्र पर्वतेषु कन्दरेषु समतल-प्रदेशेषु च प्रवहन्ती समुद्रं प्राप्तवती। स च सङ्गमप्रदेशः बोच् नाम्ना व्यवह्रियते। नर्मदा मध्यप्रदेशे महाराष्ट्रे गुजरातप्रान्ते च प्रवहति।

प्राचीनकालात् आरभ्य नर्मदा पवित्रनदीत्वेन परिगण्यते। एतस्याः तीरे बहवः ऋषयः तपः आचरितवन्तः। नदीपरिक्रमणं इच्छन्तः भक्ताः बहवः एतस्याः जन्मस्थानात् अमरकण्टकात् प्रस्थाय तीरम् अनुसृत्य 'ब्रोच्' प्रदेशे नदीं परिक्रम्य अन्यतीरे गच्छन्तः पुनरपि अमरकण्टकम् प्राप्नुवन्ति।





अमरकण्टक-समीपे नर्मदायाः देवालयः अस्ति। सहस्रशः भक्ताः नर्मदायाः दर्शनार्थं प्रतिदिनं तत्र आगच्छन्ति। स च प्रदेशः महायात्रास्थलत्वेन इदानीं प्रसिद्धः अस्ति।

# साहाय्यधनसङ्ग्रहः

वीरपुरे लक्ष्मीशः नाम कश्चित् धनिकः आसीत्। सः महाकृपणः। यदा कदापि तस्य नामोच्चरणं करणीयं चेत् जनाः 'महाकृपणः लक्ष्मीशः' इत्येव वदन्ति स्म।

एकदा ग्रामीणैः 'एका धर्मशाला निर्मातव्या' इति निश्चयः कृतः। एतदर्थं धनसङ्ग्रहकार्यम् आरब्धम्। 'लक्ष्मीशतः कथं धनं स्वीकरणीयम्' इति ग्रामीणाः चिन्तयन्तः आसन्।

तस्मिन् ग्रामे कमलानाथः नाम कश्चित् युवकः आसीत्। सः बहुबुद्धिमान् वाग्मी च। कार्यसाधने सः अतीव कुशलः। अतः ग्रामवासिनः तं 'कार्यसाधकः' इति आह्वयन्ति स्म।

एकस्मिन् दिने कमलानाथः मित्रद्वयेन सह लक्ष्मीशस्य गृहं गतवान्। धर्मशालायाः निर्माण-विषये उक्त्वा धनं पृष्टवान्।

तदा लक्ष्मीशः हासं प्रकटयन् उक्तवान्- "किम् उक्तम्? धनं दातव्यम् इति? तदपि मया! अहम् अद्यावधि कस्मै अपि साहाय्यधनं न दत्तवान्। भवतः अपेक्षया बुद्धिमन्तः अपि आगत्य रिक्तहस्तेन एव निर्गताः" इति।

तदा कमलानाथः मन्दहासपूर्वकं उक्तवान्- "महोदय! ते यथा तथा अहं मूर्खः न। सर्वे मां कार्यसाधकनाम्ना आह्वयन्ति। प्रतिवक्ता किञ्चित् बुद्धिमान् विवेकी वा यदि स्यात् तर्हि सः यथा धनं दद्यात् तथा करोमि अहम्" इति।

पुनश्च किं वक्तव्यम्? कृपणः विना प्रतिरोधं साहाय्यधनं दत्तवान्।





# कौमुदी-सोपानम्

श्रीकृष्णदेवरायः विजयनगरं परिपालयन् आसीत् । तदानीं तत्र कश्चित् प्रसिद्धः चोरः आसीत् । चोरस्य पीडा दिने दिने वर्धते स्म । 'चोरः कथं ग्रहीतव्यः' इति कृष्णदेवरायः अहोरात्रं चिन्तयति स्म । महाराजेन चोर-ग्रहणार्थं यावन्तः प्रयत्नाः कृताः ते सर्वे अस-फलाः एव आसन् ।

कृष्णदेवरायस्य आस्थाने तेनालीरामकृष्णः कश्चित् चतुरः आस्थानिकः । 'चोरः कथञ्चित् कारागारे स्थापनीयः' इति रामकृष्णः चिन्तितवान् । अतः सः सर्वत्र वदति स्म यत्- 'इदानीं मम चोरात् महती भीतिः । 'कदाचित् सः मम गृहं प्रविशेत्' इति मम आतङ्कः । मम गृहे पर्याप्ता सम्पत्तिः सङ्गृहीता अस्ति । एषा सम्पत्तिः कुत्र स्थापनीया इति अहं न जानामि । एतया चिन्तया इदानीं रात्रौ निद्रां कर्तुम् अपि न शक्नोमि । निद्राभावतः आरोग्यं क्षीणम्' इति ।

एवं रामकृष्णः सर्वत्र वदन् आसीत् किल । अतः 'रामकृष्णस्य गृहे यथेष्टं धनसम्पत्तिः अस्ति' इति वार्ता चोरः अपि ज्ञातवान् ।

'सम्पत्तिविषयं श्रुत्वा चोरः निश्चयेन चौर्यार्थं मम गृहं आगमिष्यति' इति रामकृष्णेन निश्चितम् आसीत् । अतः चोरः यदा आगमिष्यति तदा किं किं करणीयम् इति सः पूर्वम् एव पत्नीं सूचितवान् आसीत् ।

यथानिरीक्षितं सः प्रसिद्धः चोरः एकदा रामकृष्णस्य गृहम् आगतवान् । चोरस्य निरीक्षायां रामकृष्णः जागरितः एव आसीत् । यदा गृहस्य उपरि सावधानं सञ्चरतः चोरस्य पादध्वनिः श्रुतः तदा रामकृष्णः पत्नीं संज्ञया सूचितवान् ।

अनन्तरं सः कोपमिश्रितस्वरेण उच्चैः पत्नीम् उक्तवान्- ''कीदृशी पीडा भवत्याः ? तूष्णीं

''पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा''

शयनं करोतु तावत्'' इति ।

तदा पत्नी अपि कोपेन एव उक्तवती ''कीदृशी निद्रा भवतः ? निद्रासमये चोरः आगतः चेत् किं करणीयम् ? मम तु भीतिः'' इति ।

''चोरः आगच्छतु नाम । सः आगत्य धनराशिं नयति, तावदेव किल । यदि एवं भविष्यति तदा चतुर्गुणितं धनम् आनेष्यामि । चिन्ता मास्तु'' इति उक्तवान् रामकृष्णः ।

'एतद्विषये प्रष्टव्यम् इति बहुकालतः चिन्तयन्ती आसम् । भवान् एवं रत्नानि सुवर्णं च आनयति किल ? कुतः आनयति एतानि' इति पृष्टवती पत्नी ।

''अये, उच्चैः मा पृच्छतु । अहं चौर्येण एतानि सम्पादयामि । न्यायमार्गेण एतावत् कथं सम्पादयितुं शक्यम् ?'' इति पृष्टवान् रामकृष्णः ।

''चौर्येण वा कुतः आनयति भवान् ?'' इति पत्नी पुनः पृष्टवती । ''तत्सर्वं किमर्थं भवत्याः ? स्त्री रहस्यं गोपायितुं न शक्नोति । यद्यहं सत्यं वदामि तदा सा वार्ता सर्वत्र प्रसरेत् । तदा मम कारागृहवासः एव गतिः । अतः अहं किमपि न वदामि । भवती निद्रां करोतु तावत्'' इति रामकृष्णः उक्तवान् ।

''भवान् सर्वं वदति चेदेव अहं निद्रां



करोमि । अन्यथा न । चौर्यसमये भवन्तं कोऽपि न पश्यति वा ?'' इति पृष्टवती पत्नी ।

''स्वयं ब्रह्मा रुद्रः वा आगतः अपि मां बन्धयितुं न शक्नोति । अहं मन्त्रं जानामि किल'' इति उक्तवान् रामकृष्णः ।

पत्नी पुनः पृष्टवती- ''कीदृशः मन्त्रः सः? वदतु तावत्'' इति । रामकृष्णः उक्तवान्- ''भवती तु साक्षात् पिशाची इव । गृहीतं चेत् न त्यजति एव । मन्त्ररहस्यं शृणोतु तावत् । राजभवने धनागारम् अस्ति किल ? तत्र धनस्य उन्नतः राशिः एव अस्ति । धनागारे छदेः किञ्चित् अधः मनुष्यप्रवेशयोग्यः गवाक्षः अस्ति । अहं कौमुदीयुक्तरात्रौ धनागारस्य उपरि गच्छामि । गवाक्षतः कौमुदी यावत् धनागारे न प्रसरति

तावत् प्रतीक्षां करोमि। कौमुदी यदा धनागारस्य अन्तः प्रसरति तदा ''ओं भ्रान्तिः, ओं भ्रान्तिः, ओं भ्रान्तिः' इति मन्त्रं जपामि। एतेन कौमुदी-किरणाः रज्जोः आकारं प्राप्नुवन्ति, सोपानाकारेण तिष्ठन्ति च। एतेषां साहाय्येन अहं धनागारं प्रविशामि। यावत् आवश्यकं तावत् धनं स्वीकृत्य, उपरि आगच्छामि। धनस्य चौर्यं कथं भवति इति कोऽपि न जानाति। एवं कौमुदीसोपानानाम् आधारेण अहं धनागारतः धनम् आनयामि। मां ग्रहीतुं कोऽपि न शक्नोति'' इति।

''एवं वा?'' इति उद्गारं प्रकटयन्ती रामकृष्णस्य पत्नी तृष्ण्या निद्राम् आलिङ्गितवती।

पतिपत्न्योः सम्भाषणं चोरः श्रुतवान्। सः चिन्तितवान्- ''गृहस्य चौर्येण विशेषलाभः नास्ति। अतः महाराजस्य धनागारे एव चौर्यं करणीयम्'' इति।

अनन्तरदिने एषः चोरः कथञ्चित् धनागारस्य छदिम् आरूढवान्। रामकृष्णेन उक्तः गवाक्षः तेन दृष्टः। सः कदा वा गवाक्षे चन्द्रकिरणाः प्रविशेयुः इति निरीक्षमाणः आसीत्। यदा किरणाः धनागारं प्रविष्टाः तदा चोरः त्रिवारम् 'ओं भ्रान्तिः' इति उच्चार्य गवाक्षे पादौ स्थापितवान्। किरणानां सोपानं स्मरन् धनागारे कूर्दितवान्।

तत्र वायुं विना किम् अन्यत् अस्ति? चोरस्य प्रयत्नः विफलः जातः। पतनकारणेन चोरस्य हस्तौ पादौ च भग्नौ। अनन्तरदिने यदा धनागारस्य द्वारम् उद्घाटितं तदा चलितुम् असमर्थः चोरः तैः सैनिकैः दृष्टः। ते विनायासं चोरं बन्धितवन्तः। चोरेण पूर्वं यत् धनाधिकम् अपहृतम् आसीत् तत्सर्वं वशीकृतम्।

एतदनन्तरं रामकृष्णः राजसभायाम् चोरस्य ग्रहणे कृतम् उपायं सविस्तरं निवेदितवान्। तदा सभ्याः सर्वे उदरोपपीडं हसितवन्तः।

कुप्रसिद्धचोरस्य ग्रहण साहाय्यं कृतवते रामकृष्णाय कृष्णदेवरायः अमूल्यानि बहुमानानि दत्तवान्।



# लाभसहितं कार्यम्

वराहगुप्तः अतीव व्यवहारकुशलः। ग्रामे तस्य एकः अल्पः आपणः अस्ति। सः सर्वदा वार्तालापसमयेषु "यत् किमपि वा कार्यम् अस्तु, अहं वाणिज्यरूपेण एव करोमि। लाभरहितं कार्यम् अहं कदापि न करोमि" इति वदति।

गङ्गाधरः तस्य प्रातिवेशिकः। तस्य एकं कुतूहलम् आसीत् यत् कदा वराहगुप्तः एकं लाभरहितं कार्यं कुर्यात्, तथा कदा अहं तत् कार्यं पश्येयम् इति। किन्तु बहुकालपर्यन्तं तस्य इच्छासिद्धिः न अभवत्। तेन तस्य महती निराशा जाता। तदा सः यथाकथञ्चित् स्वयमेव प्रबलं कृत्वा, वराहगुप्तेन लाभरहितं कार्यम् कारयितव्यम् इति निश्चयं कृतवान्। अनन्तरं सः वराहगुप्तस्य गृहं गत्वा एकां सीवनसूचीं ददातु इति पृष्टवान्। वराहगुप्तः सूचीं दत्तवान्।

गङ्गाधरः छिन्नस्य स्वीयवस्त्रस्य सीवनकार्यं समाप्य, पुनः गत्वा वराहगुप्तस्य सूचीं प्रत्यर्पितवान्। वराहगुप्तः किमपि न उक्तवान्।

एवमेव अन्यदा गङ्गाधरः वराहगुप्तस्य मुद्गरं नीत्वा, दिनद्वयानन्तरं पुनः आनीय प्रत्यर्पितवान्। तदा अपि वराहगुप्तः किमपि न उक्तवान्।

तदा गङ्गाधरः तूष्णीं स्थातुम् असमर्थः सन् "वराहगुप्त! भवता लाभरहितं कार्यद्वयम् अहं कारितवान्" इति गर्वेण उक्तवान्।

"अहं तु स्वप्ने अपि लाभरहितं कार्यं न करोमि" इति वराहगुप्तः हसन् उक्तवान्।

"भवतः सूचीम् अहं नीतवान्। तेन भवतः कः लाभः जातः?" इति पृष्टवान् गङ्गाधरः।

"प्रत्यर्पणानन्तरं सूच्यां किञ्चित् सूत्रम् अवशिष्टम् आसीत्। तेन अहं मम वेष्टीं स्यूतवान्" इति उक्तवान् वराहगुप्तः।

गङ्गाधरः स्तब्धः। "तर्हि मुद्गरस्य को विशेषः?" इति पृष्टवान्।

"तस्य त्सरुः शिथिलः आसीत्। आलस्येन मया अद्यावधि तस्य समीकरणं न कृतम्। भवान् तं नीतवान्। इदानीं त्सरुः समीचीनः अस्ति" इति उक्तवान् वराहगुप्तः।

तदा गङ्गाधरः स्मृतवान् यत् यदा सः भित्तौ आणिं बद्धुं प्रवृत्तः, तदा त्सरुः अतीव शिथिलः आसीत्। तं स्वयमेव समीकृत्य अनन्तरं भित्तौ आणिं योजितवान्।





# अपूर्वः व्यवहारः

बाग्दादनगरस्य समीपे एकः ग्रामः। तस्य ग्रामस्य अन्ते च एकः विशालः वृक्षः। एकदा केचन जनाः तस्य वृक्षस्य छायायाम् उपविश्य परस्परं जल्पन्ति स्म। तदा एकः मध्यवयस्कः पुरुषः तेषां समीपम् आगतवान्। तस्य मलिनानि वस्त्राणि धूलिभरितानि आसन्। मस्तके केशाः अस्तव्यस्ताः आसन्। एतादृशः सः उन्मत्तः इव दृश्यते स्म।

सः वृक्षस्य समीपम् आगत्य, छायायाम् उपविष्टानां सर्वेषां मुखानि परीक्षादृष्ट्या अवलोकयन् "सर्वदा सुखम् अनुसृत्य दुःखं भवति। विजयस्य पश्चाद्भागे एव पराजयः अपि सिद्धः अस्ति। यत्र प्रकाशः अस्ति, तत्र छाया वर्तते एव। एतत् सर्वम् असत्यं वा?" इति पृष्टवान्।

ग्रामस्थेषु एकः तं दृष्ट्वा "अयि भोः, तत् अस्तु तावत्। अत्र एतत्सर्वं किमर्थं वदति? वस्तुतः किं वक्तुं भवान् अत्र आगतवान्?" इति पृष्टवान्।

"मम जीवनानुभवेन ज्ञातं सत्यम् एव इदानीम् अहम् उक्तवान्। सविस्तारवर्णनस्य जिज्ञासा अस्ति चेत् शृण्वन्तु, वदामि" इति स्वीयां कथां प्रोक्तवान्।

सः पुरुषः बाग्दादनगरद्वारस्य रक्षकभटः आसीत्। रात्रिसमयः। पूर्णिमायाः प्रकाशेन दिशः व्याप्ताः। सः द्वारस्य समीपे उपविश्य तन्द्रामग्नः जातः। तदा अकस्मात् सः कस्यचित् मृदुहस्तस्य स्पर्शेन जागरितः। नेत्रे उन्मील्य यदा पश्यति तदा तस्य पुरतः काचन सुन्दरयुवती स्मयमाना स्थिता आसीत्। तया सह अन्यः कोऽपि न आसीत्। तेन तस्य आश्चर्यं, विविधाः संशयाः च सञ्जाताः।

सः तां दृष्ट्वा उत्थाय "का भवती? अस्मिन् रात्रिसमये किमर्थम् आगतवती? मम

"अरेबिया कथा"

समीपे किम् अस्ति कार्यम् ?'' इति पृष्टवान्।

सा स्त्री किमपि उत्तरम् अनुक्त्वा तस्य हस्ते कानिचन रजतनाणकानि स्थापितवती। पुनः एकवारं मन्दहासं प्रकटितवती च।

''अहं न उत्कोचग्राहकः।'' इति उक्तवान् रक्षकभटः।

सा मञ्जुलस्वरेण ''एषः न उत्कोचः। दुष्टकार्यार्थं यदि धनं दीयते, तर्हि उत्कोचः इति वदन्ति। इदानीम् अहम् एकम् उत्तमकार्यं साधयितुं भवतः साहाय्यं याचितुम् आगतवती। तदर्थं एतत् धनम्'' इति उक्तवती।

''कीदृशम् उत्तमकार्यं तत् ?'' इति पृष्टवान् रक्षकभटः।

अस्य नगरस्य न्यायाधीशस्य पुत्री अहं च प्रियसख्यौ। किन्तु केनापि कारणेन सः न्यायाधीशः आवयोः परस्परदर्शनं, सम्भाषणं वा न इच्छति। न्यायाधीशस्य पुत्री तु माम् अदृष्ट्वा अतीव दुःखिता अस्ति। अतः अद्य रात्रौ न्यायाधीशस्य गृहे स्थातुं यथा अहं शक्नोमि, तथा भवता साहाय्यं करणीयम्'' इति सा सुन्दरी उक्तवती।

''तत् कथं वा स्यात् ?'' इति आश्चर्येण ताम् एव पश्यन् रक्षकभटः पृष्टवान्।

''यदि भवान् सम्मतिं ददाति, तर्हि न तत् क्लिष्टं कार्यम्'' इति उक्त्वा सा सविवरणं कार्यसाधनप्रकारं सूचितवती।



रक्षकभटः तां न्यायाधीशस्य गृहं नीत्वा हस्तेन द्वारं ताडितवान्। यदा न्यायाधीशः द्वारम् उद्घाटितवान्, तदा ''श्रीमन्, एषा भगिनी ग्रामान्तरतः आगतवती। अस्याः कश्चित् बन्धुः अस्मिन् नगरे वसति। किन्तु तस्य बन्धोः गृहस्य सङ्केतचिटिका कुत्रचित् नष्टा। अतः एषा भवतः गृहस्य बहिर्भागे रुदती उपविष्टा आसीत्। एतस्याः जनकम् अहं जानामि। सः महान् सज्जनः गौरवार्हः च। अस्याः शरीरे बहुमूल्यानि सुवर्णाभरणानि अपि सन्ति। रात्रिसमये एकाकिनी एषा बहिः तिष्ठति चेत् महान् अपायः अस्ति एव। अतः अद्य भवतः गृहे शयनार्थम् अवकाशं कल्पयतु'' इति उक्तवान् रक्षकभटः।



न्यायाधीशः क्रोधेन "किं रे दुरात्मन् ! कीदृशः चोरः अस्ति भवान् ! भवतः सा चोरसखी कुत्र अस्ति ?" इति भर्त्सयन् उच्चैः पृष्टवान् ।

तस्य प्रश्नं श्रुत्वा रक्षकभटः आश्चर्यचकितः किङ्कर्तव्यतामूढः च जातः । अनन्तरं तेषां वचनैः सः ज्ञातवान् यत्, रात्रौ तस्य वचन-प्रभावेण न्यायाधीशस्य गृहे आश्रयं प्राप्तवती सा स्त्री, न्यायाधीशस्य सर्वाणि आभरणानि धनादिकं च अपहृत्य पलायितवती इति ।

"रे रे चोरसहचर ! भवतः मरणदण्डः एव योग्यः ! " इति न्यायाधीशः उच्चैः आक्रोशं कृतवान् ।

रक्षकभटः भीत्या कम्पमानः "स्वामिन्, शासनानुसारेण अपराधी अपि दिनत्रयप्रमाण-कम् अवधिं प्राप्तुम् अर्हः अस्ति । तस्मिन् समये तेन स्वीयं निरपराधित्वं निरूपणीयम्, अथवा परिहारधनं सम्पाद्य अर्पणीयं भवति । अतः कृपया मह्यम् अपि तादृशम् अवधिं ददातु । धर्मात्मा भवान् निराकरणं न करोतु" इति प्रार्थितवान् ।

तदा नगराधिकारी न्यायाधीशः च परस्परं किञ्चित् समालोच्य, दिनत्रयात्मकम् अवधिं दत्त्वा तं त्यक्तवन्तौ । अनन्तरं सः रक्षकभटः दिनद्वयं यावत् नगरस्य सर्वेषु मार्गेषु तस्याः अन्वेषणं कृतवान् । कुत्रापि सा न दृष्टा ।

किन्तु तृतीये दिने एकस्यां वीथ्यां एकस्य

सः न्यायाधीशः नगरप्रमुखः अपि आसीत् । अतः रक्षकभटस्य वचनं निराकर्तुम् असमर्थः सः तां गृहस्य अन्तः नीतवान् ।

अनन्तरं सः रक्षकभटः स्वीयानि कर्तव्य-कर्माणि समाप्य गृहं गतवान् । अल्पे एव काले केचन भटाः तस्य गृहसमीपम् आगत्य तम् आहूतवन्तः ।

रक्षकभटः क्रोधेन द्वारम् उद्घाटय 'कः विशेषः' इति पृष्टवान् । "शीघ्रं नगराधि-कारिणः कार्यालयम् आगच्छतु" इति ते उक्तवन्तः । सः तैः सह नगराधिकारिणः समीपं प्रस्थितवान् ।

तत्र नगराधिकारिणा सह न्यायाधीशः अपि उपविष्टः आसीत् । रक्षकभटं दृष्ट्वा

गृहस्य वातायनद्वारा तस्याः स्त्रियः मुखं तेन दृष्टम्। तं दृष्ट्वा स्मयमाना सा अन्तः आगच्छतु इति हस्तचालनेन सूचितवती। रक्षकभटः धावन् तस्याः समीपं गत्वा – "रे रे चोरनारि! कथम् अदृश्यतां गता आसीत्?" इति कर्कशस्वरेण पृष्टवान्।

सा तु निश्चला निर्भीता च – "अहं कुत्र वा गतवती? भवतः प्रतीक्षां कुर्वती अस्मि। इदानीं मम अन्वेषणं सफलं जातम्" इति हसन्ती उक्तवती।

"रे दुष्टे! भवत्याः कारणेन मम उपरि कीदृशं कष्टम् आपतितम् इति जानाति वा?" इति पृष्टवान् रक्षकभटः।

"भवद्द्वारा अहम् अपि किं न्यूनं कष्टम् अनुभूतवती वा?" इति सा पुनः पृष्टवती।

"मत्कारणतः भवत्याः कष्टं वा?" इति रक्षकभटः आश्चर्येण पृष्टवान्।

सा किञ्चित् हसन्ती क्षणद्वयं तूष्णीं स्थित्वा अनन्तरं "भवान् तु कीदृशः मुग्धः भोः! अहं वातायनसमीपे अत्र एतावत्पर्यन्तं स्थित्वा किमर्थं प्रतीक्षां कृतवती इति जानाति वा? भवान् अत्र आगच्छति एव इति अहं निश्चयेन जानामि स्म" इति उक्तवती।

"किमपि किमपि असम्बद्धप्रलापं न करोतु। मम साहाय्यतः न्यायधीशस्य गृहं प्रविश्य तत्र स्थितानि समस्तवस्तूनि अपहृतवती। इतःपरम्



अपि मम समीपे भवत्याः किं वा कार्यं स्यात्?" इति पृष्टवान् रक्षकभटः।

"न्यायाधीशः अधर्ममार्गेण यत् सम्पादितवान्, तत् धनम् अहम् अपहृतवती इति तु सत्यम् एव। किन्तु तादृशं कार्यम् अहं किमर्थं कृतवती इति भवान् जानाति वा? आवां विवाहद्वारा दम्पती भूत्वा एतेन धनेन सुखेन जीवनं यापयावः इति आशया एव। अत्र पश्यतु!" इति उक्त्वा सा तत्रत्याम् एकां कपाटिकाम् उद्घाटितवती। तत्र बहूनि आभरणानि सुवर्णनाणकानि च आसन्।

तत्सर्वं दृष्ट्वा रक्षकभटः लोभेन तत् धनं पुनः पुनः पश्यन् 'सत्यमेव एतत् सर्वं रमणीयम् अस्ति। किन्तु इदानीम् अहं विपत्तौ पतितः



अस्मि। न्यायाधीशस्य गृहे यत् चौर्यं जातं तस्मिन् चौर्ये मम अपि सहभागित्वम् अस्ति इति मम उपरि अपराधः आरोपितः' इति उक्तवान्।

"एतावदेव खलु! भयं मास्तु। सः न्यायाधीशः एव अपराधी इति समर्थयितुम् एकः समीचीनः उपायः अस्ति" इति उक्त्वा सा रक्षकभटस्य कर्णे किमपि उक्तवती।

अनन्तरं रक्षकभटः ततः निर्गत्य नगराधिकारिणः समीपं गत्वा "श्रीमन्, सा चोरनारी इदानीम् अपि तस्य न्यायाधीशस्य गृहे एव अस्ति। सूक्ष्मरूपेण अन्वेषणानन्तरम् एतं विषयम् अहं ज्ञातवान्। अतः कृपया न्यायाधीशस्य गृहे सर्वत्र अन्वेषणं कर्तुम् अवकाशं कल्पयतु" इति याचितवान्।

'तथा अस्तु' इति अङ्गीकृत्य नगराधिकारी स्वयमपि रक्षकभटेन सह न्यायाधीशस्य गृहं गतवान्। नगराधिकारिणः वचनं निराकर्तुम् असमर्थः न्यायाधीशः अन्वेषणार्थं सम्मतिं दत्तवान्।

रक्षकभटः गृहं प्रविश्य सर्वेषु प्रकोष्ठेषु अन्वेषणं कृतवान्। एकस्मिन् प्रकोष्ठे एका बृहती काष्ठपेटिका आसीत्। तस्याः पश्चाद्भागं दृष्ट्वा रक्षकभटः न्यायाधीशं "श्रीमन्, तस्याः स्त्रियः वस्त्रस्य वर्णः कः आसीत्?" इति पृष्टवान्।

"सा हरितवर्णीयं वस्त्रं धृतवती आसीत् इति स्मरामि। किमर्थम् एवं पृच्छति?" इति पृष्टवान्।

तदा झटिति रक्षकभटः तस्याः पेटिकायाः पश्चादभागतः स्त्रीधारणयोग्यम् एकं वस्त्रं बहिः निष्कासितवान्। तत् वस्त्रं हरितवर्णीयम् आसीत्। किञ्च तत् रक्तयुक्तम् अपि आसीत्।

तत् दृष्ट्वा नगराधिकारी न्यायाधीशः च आश्चर्यचकितौ जातौ।

अनन्तरं नगराधिकारी क्रूरदृष्ट्या न्यायाधीशं पश्यन् उच्चस्वरेण "किं भोः! न्यायाधीशमहाशय! भवान् तां स्त्रीं हत्वा शवं कुत्र स्थापितवान्? किमर्थं भवान् तां हतवान्?" इति पृष्टवान्।

"स्त्रीहत्या वा? तत्रापि मया? अहमेव तां

हतवान् इति भवतः अभिप्रायः वा ?" इति वदन् न्यायाधीशः तत्र एव अधः पतितवान्।

नगराधिकारी तं कृपादृष्ट्या पश्यन् समाश्वासयन् च "भयं मास्तु। एषः वधः भवतः गृहजनेषु अन्येन केनापि कृतः स्यात्। परिशील्यामः। भवतः विषये अहम् उदाररूपेण एवं व्यवहरामि। भवतः उपरि कापि विपत्तिः यथा न आपतेत्, तथा अहं व्यवस्थां करोमि। तावत्पर्यन्तम् एतं विषयं गुप्तरूपेण स्थापयामः" इति उक्त्वा, अनन्तरं रक्षकभटं "इदानीं भवतः निरपराधित्वं सिद्धं जातम्। किन्तु एतं विषयं कुत्रापि मा वदतु" इति आज्ञारूपेण उक्तवान्।

"स्वामिन्! भवतः आज्ञां मम शिरसि धरामि" इति रक्षकभटः निरातङ्कभावेन उक्त्वा तस्याः स्त्रियः वसति गृहं प्रतिप्रस्थितः।

तस्याः सौन्दर्यं, बुद्धिमत्ताम्, अत्यद्भुतचातुर्यं च दृष्ट्वा सः आश्चर्येण भ्रान्तः आसीत्।

यदा रक्षकभटः तस्याः गृहसमीपं गतवान्, तदा द्वारं पिहितं तथा द्वारश्रृङ्खला बद्धा आसीत्। कार्यान्तरेण कुत्रापि गता स्यात्। इदानीम् एव आगच्छेत् इति चिन्तयन् बहुसमयपर्यन्तं तत्रैव स्थित्वा सः तस्याः प्रतीक्षणं कृतवान्। अनन्तरं सः प्रातिवेशिकगृहं गत्वा सा स्त्री कुत्र गतवती इति पृष्टवान्।

"किं भोः, सा तस्य गृहस्य गृहस्वामिनी वा? तत् जीर्णगृहस्य समीकरणार्थं शून्यम् स्थापितम् आसीत्। काचित् अपरिचिता स्त्री केवलं दिनत्रयतः तत्र आसीत्। अद्य सा स्वीयवस्तूनि गृहीत्वा कुत्रचित् गतवती" इति प्रातिवेशिकाः उक्तवन्तः।

तदारभ्य रक्षकभटः मतिभ्रष्टः भूत्वा तत्र तत्र अटन् कालं यापयन् अस्ति।

एवंरीत्या उक्तां रक्षकभटस्य कथां श्रुत्वा वृक्षस्य छायायाम् उपविष्टाः ग्रामस्थाः करुणया 'हन्त! हन्त! वराकः एषः!' इति उद्गारवचनं उक्तवन्तः। तं समाश्वासितवन्तः च।



# वास्तविकं रहस्यम्

समुद्रगुप्तः धनगुप्तः च सिरिपुरस्य वणिजौ । चिरकालतः तयोः परस्परं मैत्री आसीत् । तौ तदा तदा वाणिज्यार्थं नौकायानेन देशान्तरेषु सञ्चारं कुरुतः स्म ।

एकदा तौ देशान्तरेषु वाणिज्यं समाप्य सिरिपुरं प्रति प्रस्थितौ । समुद्रमार्गमध्ये धनगुप्तः स्वीयं वज्रद्वयं प्रदर्श्य समुद्रगुप्तं "इदं प्रथमतया अहं मदीयं सर्वधनं दत्त्वा एतत् वज्रद्वयं क्रीतवान् । किन्तु इदानीं सहसा मम मनः समुद्रचोरेभ्यः भीतम् अस्ति । किं वा करोमि ?" इति पृष्टवान् ।

"भीतिः मास्तु । कटिबन्धनवस्त्रम् अस्ति किल? तस्मिन् वस्त्रे तत् वज्रद्वयं स्थापयतु" इति समुद्रगुप्तः सूचितवान् ।

परेद्युः धनगुप्तस्य भीतिः यथार्था जाता । समुद्रचोराः नौकाम् आक्रम्य तयोः समीपम् आगतवन्तः । चोराणां नायकः तयोः पुरतः खड्गं प्रदर्शयन् "वृथा दुर्मरणस्य इच्छा नास्ति खलु ? भवत्समीपे यानि यानि अमूल्यवस्तूनि सन्ति तानि सर्वाणि यच्छन्तु" इति गर्जितवान् ।

समुद्रगुप्तः धनगुप्तः च निरुपायौ जातौ । अनेकेषु स्यूतेषु पेटिकासु च स्थापितानि सर्वाणि वस्तूनि चोरेभ्यः समर्पितानि । "सर्वं दत्तं खलु ! अथवा इतोऽपि यत्किञ्चित् गुप्तरूपेण स्थापितं वा ?" इति पृच्छन् चोरनायकः तयोः समीपम् आगन्तुं प्रवृत्तः ।

तदा समुद्रगुप्तः धनगुप्तं –"प्राणानाम् अपेक्षया प्रियतरं किं वा अस्ति ? तत् वज्रद्वयम् अपि ददातु" इति उक्तवान् ।

तदा समुद्रगुप्तः कटिभागे गुप्तरूपेण स्थापितं वज्रद्वयम् अपि चोराणां नायकाय दत्तवान् । सर्वे चोराः ततः निर्गताः । अनन्तरं धनगुप्तः समुद्रगुप्तं क्रोधेन पश्यन् "भवान् एतादृशः विश्वास-घातकः इति अहं पूर्वं न ज्ञातवान्" इति निन्दितवान् ।

समुद्रगुप्तः स्वीयकट्यां बद्धां चर्मपट्टिकाम् अपनीय प्रदर्शितवान् उक्तवान् च "अत्र पश्यतु । अत्र विंशतिः वज्राणि सन्ति । तेषु प्रत्येकस्य अपि वज्रस्य भवतः वज्रयोः अपेक्षया अधिकं मूल्यं भवति । चत्वारि वज्राणि भवान् स्वीकरोतु । चोराणां नायकस्य पुरतः अहं यत् उक्तवान् तस्य वास्तविकरहस्यम् एतत् एव । यदि अहं तथा न वदेयम्, तर्हि सः मम शरीरम् अपि सम्यक् परीक्षेत तदा आवयोः द्वयोः अपि सर्वाणि वज्राणि अपहृत्य गच्छेत् खलु" इति ।





# शिवपुराणम्

सृष्टेः पूर्वं समग्रः विश्वः जले निमग्नः आसीत्। सर्वत्र अन्धकारः व्याप्तः आसीत्। तदा जले एकं महातेजः उद्भूतम्। गच्छति काले तदेव तेजः ज्योतिर्लिङ्गरूपताम् आपन्नम्। तदेव रूपं परमेश्वरः शिवः। तस्य ज्योतिर्लिङ्गस्य अर्धभागतः महाशक्तिः उत्पन्ना। एषा एव महाशक्तिः प्रकृतिः इति महामाया इति च कथ्यते।

परमेश्वरी परमेश्वरः च विष्णोः सृष्टिं कृतवन्तौ। महाविष्णोः नाभिकमलतः महापद्मस्य जन्म जातम्। पद्मस्य नालः बहुयोजनदीर्घः आसीत्। पद्मं च अद्भुतम् आश्चर्यकरं च आसीत्। तस्मात् पद्मात् पद्ममुखः ब्रह्मा समुत्पन्नः। ब्रह्मणा सह सरस्वती अपि उत्पन्ना।

समस्तलोकं जलेन व्याप्तं दृष्ट्वा ब्रह्मा चिन्तितवान्- 'मम जन्मस्थानभूतस्य पद्मस्य किं मूलं स्यात्?' इति। एतेन विचारेण प्रेरितः सः ऊर्ध्वलोकान् अधोलोकान् च गत्वा आगतवान्। अन्ते ओङ्कारजपं कृतवान्। तदा महाविष्णुः तस्य पुरतः प्रत्यक्षः अभवत्। ब्रह्मणः विचारः आसीत् यत् अहम् एव सृष्टौ प्रथमपुरुषः इति। इदानीं विष्णुं दृष्ट्वा तस्य कुतूहलं प्रवृद्धम्। सः महाविष्णुं पृष्टवान्- "भवान् कः? किमर्थम् अत्र आगतवान्?" इति।

तदा विष्णुः उक्तवान्- "सृष्टिकार्यार्थम् अहम् एव मम नाभिकमलतः भवन्तं सृष्टवान्।

१. दक्षयज्ञः



अहं विष्णुः भवतः सृष्टेः कारणीभूतः'' इति।

तदा ब्रह्मणः अहम्भावः जागरितः। सः कोपेन उक्तवान्- ''जगतः सृष्टिकर्ता अहम्। मम अधिपतिः भवान् वा? यदि पराक्रमः अस्ति तर्हि मां पराजित्य आधिपत्यं स्थापयतु। वृथा जल्पनं किमर्थम्?'' इति।

विष्णुः ध्यानमग्नः जातः। तदा शिवः ज्वालालिङ्गरूपेण तयोः पुरतः प्रत्यक्षः अभवत्। विष्णुः ब्रह्माणम् उक्तवान्- यः एतस्य ज्वालालिङ्गस्य आदिम् अन्तं च ज्ञातुं शक्नोति सः एव श्रेष्ठः'' इति। ब्रह्मा एतद्वचनम् अङ्गीकृतवान्। किन्तु अस्मिन् प्रयत्ने उभौ अपि पराजितौ। तदा शिवः प्रत्यक्षः भूत्वा ब्रह्माणम् उक्तवान्- ''भवान् पञ्चभूतैः निर्मीयमाणस्य विश्वस्य सृष्ट्यर्थं विष्णोः नाभिकमलतः उत्पन्नः। अतः सृष्टिकार्यं भवतः कर्तव्यम्'' इति।

ब्रह्मा परमेश्वरं तिरस्कारदृष्ट्या दृष्ट्वा उक्तवान्- ''कः भवान्? मम इव भवतः अपि कथं पञ्चमुखानि? अहं तु सृष्टिकर्ता। अतः मम पञ्चमुखत्वं युज्येत'' इति।

ब्रह्मणः वचनं श्रुत्वा क्रुद्धः शिवः रौद्ररूपं धृतवान्। वामहस्तस्य कनिष्ठिकायाः नखं छुरिकारूपेण प्रयुञ्जमानः ब्रह्मणः पञ्चसु अन्यतमं मुखं कर्तितवान्। एतेन ब्रह्मणः गर्वः अपगतः। सः ब्रह्माणं नमस्कुर्वन् तदीयां स्तुतिम् आरब्धवान्।

तदा परमेश्वरः रौद्ररूपं परित्यज्य सौम्यरूपं धृत्वा उक्तवान्- ''ब्रह्मन्! सृष्टिकार्यार्थं भवान्, तथैव सृष्टेः रक्षणार्थं विष्णुः च समुत्पन्नौ। शिवः अहं लयकारकः। रुद्रः इति शिवः इति च जनाः माम् आह्वयन्ति। भवन्तौ मम ज्वालालिङ्गरूपस्य रूपान्तरं पार्थिवलिङ्गं शिवलिङ्गं च पूजयताम्'' इति। एवम् उक्त्वा सः ज्वाललिङ्गे अन्तर्भूतः।

एतदनन्तरं ब्रह्मा विष्णुसकाशात् वेदादिकं परिगृह्य पद्मासने उपविष्टवान्। ओङ्कारजपम् आरब्धवान् च।

तदा जले प्लवमानं एकम् अण्डम् ब्रह्मणः समीपम् आगतम्। ब्रह्मा किञ्चित्कालं विस्मय

पूर्वकं तत् दृष्टवान्। तदा अण्डतः मन्दम् ओङ्कारध्वनिः श्रुतः। यतः ध्वनिः उत्पन्नः तेन एव द्वारेण ब्रह्मा अण्डम् प्रविष्टवान्। अन्तः गाढः अन्धकारः व्याप्तः आसीत्। तत्र सः स्वशरीरं परित्यज्य चतुर्मुखरूपेण पुनः जन्म प्राप्तवान्। यदा ब्रह्मा ततः बहिः आगतः तदा अण्डं द्विधा विभक्तम्। तदानीं अण्डस्य अन्तः स्थितं जलं शुष्कं जातम्। अण्डस्य एकार्धं पृथिवी सञ्जातम्। द्वितीयार्धम् आकाशः सञ्जातम्।



एतत् दृष्ट्वा ब्रह्मा बहु सन्तुष्टः। सः पृथिव्यां चराचरं स्रष्टुम् आरब्धवान्। सर्वप्रथमं सः सनकसनन्दादीन् सृष्टवान्। किन्तु सृष्टिसौन्दर्यस्य आस्वादने तेषां काऽपि आसक्तिः न आसीत्। ते परमेश्वरं स्मरन्तः तपः तप्तुं ततः निर्गताः। एतत् दृष्ट्वा अतीव खिन्नः ब्रह्मा रोदनम् आरब्धवान्।

तदा तदीयानि अश्रूणि यानि पतितानि तेभ्य तेजःस्वरूपी शिवः समुत्पन्नः।

शिवस्य स्वरूपं स्वच्छं शुभ्रं च आसीत्। दशसु दिक्षु प्रकाशमानं तदीयं तेजः दृष्ट्वा विस्मितः ब्रह्मा पृष्टवान्- 'कः भवान्?' इति।

''अहं शिवः अस्मि, रुद्रः अस्मि'' इति उक्तवान् शिवः।

तदा विष्णुः प्रत्यक्षः भूत्वा उक्तवान्- ''ब्रह्मन्! भवान् सृष्टिकार्यं कृतवान्। अहं तु सृष्टेः रक्षणकर्ता अस्मि। चराचरात्मिकायाः एतस्याः सृष्टेः लयकार्यार्थं परमेश्वरः शिवरूपेण उत्पन्नः'' इति।

एतदनन्तरं ब्रह्मा सत्यलोके वासं कृतवान्। विष्णुः वैकुण्ठे स्थितवान्। शिवः निवासार्थं कैलासं गतवान्। सत्यलोकं प्राप्तः ब्रह्मा स्वसाहाय्यार्थं मरीचिः कश्यपः दक्षः गौतमः वसिष्ठः कर्दमः इत्यादीन् नव ब्रह्माणः सृष्टवान्।

तेषु दक्षब्रह्मणः चतुःषष्टिपुत्र्यः कश्यपाय दत्ताः। अदितेः गर्भतः इन्द्रादिदेवताः समुत्पन्नाः। दितेः गर्भतः गरुडः अनूरुः च समुत्पन्नौ। कद्रुदेव्याः गर्भतः सर्पादयः



जाताः। स्वयायाः गर्भतः यक्षराक्षसादयः सञ्जाताः।

शिवं परिणेतुम् इच्छन्ती महेश्वरी सतीनाम्ना दक्षब्रह्मणः पुत्रीभूय जन्म प्राप्तवती। सतीशिवयोः विवाहार्थम् इन्द्रविष्णुब्रह्मादयः समागताः आसन्। अतिथीनां स्वागतार्थं सत्कारार्थं च शिवः नन्दिकेश्वरं भैरवं च नियुक्तवान् आसीत्। विवाहानन्तरं शिवः पत्न्या सह ससन्तोषं कैलासं गतवान्।

किञ्चित् कालानन्तरं अनेके महानुभावाः सम्भूय 'प्रयागे कश्चन महायागः करणीयः' इति निश्चितवन्तः। सङ्कल्पपूर्वकं यागः आरब्धः। ब्रह्मविष्णुमहेश्वरादयः देवाः यागार्थं निमन्त्रिताः।

यागार्थम् आगतानां महापुरुषाणां निवासादिव्यवस्थां परिशीलयन्तः महर्षयः तान् उचितेषु आसनेषु उपवेशितवन्तः। सर्वे यज्ञम् आसक्त्या पश्यन्तः आसन्। अत्रान्तरे दक्षः स्वशिष्यैः सह तत्र आगतवान्।

तदा सर्वे झटिति उत्थाय दक्षस्य समीपं गतवन्तः, गौरवं प्रदर्शितवन्तः च। आसने उपविष्टः दक्षः सभायां चतसृषु दिक्षु दृष्टिं प्रसारितवान्। ब्रह्माणं विष्णुं च नमस्कृतवान्। "जामाता शिवः शिष्टाचारपालनार्थं वा आसनात् न उत्थितवान्" इत्येतम् अंशं दक्षः ज्ञातवान्। तदा सः सभासदान् उद्दिश्य उक्तवान्- 'भवन्तःसर्वे समुचितम् आदरं प्रदर्शितवन्तः। एषः ईश्वरः मम जामाता, मम विषये अनादरं प्रकटयन् आसनात् न उत्थितवान् अपि। ज्येष्ठकनिष्ठविवेकः अपि नास्ति एतस्य। एतादृशे जने सभायां स्थिते, अहम् अत्र न तिष्ठामि" इति उक्त्वा शिष्यैः सह प्रतिप्रस्थितः एव।

तदा विष्णुब्रह्मादयः झटिति उत्थाय दक्षसमीपम् आगत्य उक्तवन्तः- 'एषः ईश्वरः परमेश्वरस्य अंशभूतः। अतः एवं प्रकारेण एतस्य निन्दनम् न उचितम्" इति।

अत्रान्तरे ईश्वरनिन्दनेन कुपितः नन्दी दक्षं शप्तवान्- "भवान् परमेश्वरस्य निन्दां कृतवान्। अतः भवतः शिरः यज्ञकुण्डे

आहुतिरूपेण पततु" इति ।

एतेन क्रुद्धः दक्षः अपि प्रतिशापं दत्तवान् "भवन्तः रुद्रगणीयाः आचारभ्रष्टाः भवन्तु । वेदाचारबाह्याः सन्तः पाखण्डिनः भवन्तु" इति । तदा ब्रह्मादयः "शापः प्रतिशापः च क्रियाकारी न भवतु । यज्ञः निर्विघ्नं परिसमाप्तः भवतु" इति प्रार्थितवन्तः ।

एतदनन्तरं रुद्रः यज्ञसमाप्तेः समनन्तरम् एव गणेन सह ततः निर्गतः ।

दक्षः अपि भृगुः इत्यादिभिः शिष्यैः सह स्वकीयम् आश्रमम् आगतवान् । आगत्य स्वयम् अपि एकं यागम् आरब्धवान् । शिवविषये सः पूर्वम् एव असन्तुष्टः किल ? अतः यागार्थं शिवः तेन न निमन्त्रितः ।

एतेन अपि दक्षस्य क्रोधः न शान्तः । सः पुनरपि बृहस्पतियज्ञनामकम् एकं महायागं कर्तुं सङ्कल्पितवान् । एतदर्थं सर्वान् ऋषीन् देवान् च आहूतवान् । आहूतानां सत्कारार्थं विशेषव्यवस्थां कृतवान् । बान्धवान् स्वागतकार्ये नियोजितवान् च ।

'अस्मिन् यज्ञे अपि शिवाय हविर्भागः न दातव्यः' इति दक्षः निश्चितवान् ।

एतद्यज्ञार्थं विश्वेदेवाः इत्यादयः, कश्यपः अगस्त्यः अत्रिः भृगुः मरीचिः नारदः पराशरः इत्यादयः महर्षयः च उपस्थिताः आसन् । एतेषु अधिकाः दक्षस्य कोपात् भीताः उपस्थिताः । एतेषां सर्वेषां सत्कारार्थं शिष्यगणः वसत्यादिव्यवस्थार्थं विश्वकर्मा च नियोजितः आसीत् ।



यज्ञदीक्षादीक्षितः दक्षः पत्न्या सह यागशालां प्रविष्टवान् । सभायाम् उपस्थितान् सर्वान् नमस्कृतवान् च ।

शिवस्य निमन्त्रणम् एव न आसीत् किल ? अतः सः तत्र अनुपस्थितः । ब्रह्मा विष्णुः च निमन्त्रणं प्राप्य अपि दक्षस्य एतद्यागार्थं न आगतौ ।

देवताभिः महर्षिभिः च पूर्णायां सभायां शिवस्य अनुपस्थितिं शिवभक्ताः मरीचिः दधीचिः भृगुः इत्यादयः ज्ञातवन्तः । ते दक्षे



पृष्टवन्तः च- 'भवान् एतद्यागार्थं भवतः जामातुः शिवस्य, पुत्र्याः सतीदेव्याः च निमन्त्रणं न कृतवान् वा ? किमर्थं तौ अत्र अनुपस्थितौ' इति ।

तदा दक्षः उक्तवान्- "शिवः कर्मभ्रष्टः । अतः मया सः न निमन्त्रितः । श्मशानवासी कपालधारी प्रेतगणैः परिवृतः च सः अपवित्रः एव । पवित्रे अस्मिन् यज्ञे तस्य उपस्थितिः अमङ्गलकरः" इति ।

शिवस्य निन्दया क्रुद्धः दधीचिः उक्तवान्- "एतद्यागार्थं भवान् शिवम् अनामन्त्र्य महान्तम् अपराधं कृतवान् । अतः एषः यागः कदापि सफलः न भविष्यति । शिवेन विना यागः अपूर्णः एव । यागे उपस्थिताः जनाः अपि अल्पे एव काले कष्टम् अनुभविष्यन्ति" इति । अनन्तरं सः ततः निर्गतवान् । मरीचि-गौतम-वामदेवादयः अपि तम् अनुसृत्य सभातः बहिः गतवन्तः ।

तदा दक्षः सभासदान् उद्दिश्य उक्तवान्- "इदानीं ये ऋषयः निर्गताः ते शठाः पाखण्डिनः च । इतः तेषां निर्गमनम् उचितम् एव आसीत् । अतः चिन्ता न करणीया । भवन्तः यज्ञकर्मणि व्यापृताः भवन्तु" इति ।

कैलासे शिवेन सह सुखेन गृहस्थजीवनं यापयन्ती सतीदेवी, एकदा उद्याने विहरन्ती आसीत् । अत्रान्तरे सा आकाशे उड्डीयमानानि विमानानि दृष्टवती । तदा सा सखीः उद्दिश्य उक्तवती- "एतानि विमानानि कुतः आगच्छन्ति, कुत्र गच्छन्ति इति ज्ञात्वा मां निवेदयन्तु" इति ।

सख्यः सर्वत्र विचार्य आगत्य उक्तवत्यः यत् दक्षेण प्रचाल्यमाने यज्ञे भागं वोढुं एतैः विमानैः देवाः गच्छन्तः सन्ति इति ।

एतत् श्रुतवत्याः सतीदेव्याः मनसि 'पित्रा चाल्यमाने यज्ञे पत्या सह भागः ग्रहीतव्यः' इति इच्छा समुत्पन्ना । अतः सा तत्क्षणे एव शिवसमीपं प्रस्थिता ।

सा शिवसमीपं गत्वा उक्तवती- "मम पित्रा यज्ञः चाल्यमानः अस्ति इति श्रुतम् । देवाः तदर्थं गच्छन्तः सन्ति । वयम् अपि

रुद्रगणैः सह गत्वा यज्ञे भागं निर्वहामः। अद्य एव गच्छामः'' इति।

तदा शिवः पत्नीं सान्त्वयन् उक्तवान्- ''भवत्याः पिता अस्माकं विषये क्रुद्धः। अतः एव आवाम् अनिमन्त्र्य यज्ञं प्रचालयन् अस्ति। निमन्त्रणं विना तत्र गमनं न उचितम्। उदारभावेन वयं गच्छामः चेदपि तत्र अपमानः सम्भवेत् एव। विनाकारणम् अपवादवचनानि किमर्थं श्रोतव्यानि? अतः यज्ञार्थं गमनं न तथा उचितम्'' इति।

''तर्हि भवान् न आगच्छतु। अहम् एकाकिनी गच्छामि। मदीयः पिता मम अपमानं कथं कुर्यात्? कार्यमग्नः पिता निमन्त्रणं दातुं विस्मृतवान् स्यात्। अहं तत्र गत्वा तम् एतद्विषयं स्मारयामि। पिता कुपितः चेदपि चिन्ता मास्तु। अहं मधुरवचनैः तस्य कोपं दूरीकरोमि। यथा भवतः कृते आमन्त्रणं आगच्छेत् तथा करिष्यामि। अतः नन्दीश्वरादिभिः सह मां प्रेषयतु'' इति सतीदेवी उक्तवती।

''सतीदेवि! भवतीं विना अहं क्षणमात्रम् अपि स्थातुं न शक्नोमि। भवती तु पितुः यज्ञार्थं गन्तुं समुत्सुका अस्ति। तत्र भवत्याः अपमानः भवेत् इति मम अन्तरङ्गम् वदति। वृथा विपत्तेः आह्वानं किमर्थम्? पुनरपि एतद्विषये चिन्तयतु भवती'' इति शिवः सतीदेवीम् उक्तवान्।

किन्तु पितृगृहं गन्तुं सिद्धा सतीदेवी पत्युः वचनस्य सत्यतां न ज्ञातवती। पिता अपमानं कुर्यात् इति ऊहितुम् अपि न शक्तवती सा। मातापितरौ सहोदराः बान्धवाः च द्रष्टव्याः इति एका एव आलोचना तस्याः मनसि। अतः शिवस्य हितवचनानि अविगणय्य सा गन्तुं प्रवृत्ता।

शिवः चिन्तितवान्- 'भवितव्यं भविष्यति एव। दैवीं लीलां कः वा निवारयितुं शक्नोति' इति। अतः सः नन्दिकेश्वरादिभिः सह सतीदेवीं दक्षयज्ञार्थं प्रेषितवान्।





# मन्त्रसिद्धिः

महादेवशास्त्री इति कश्चित् पण्डितः एकं गुरुकुलं चालयति स्म। तत्र वृषभः नाम कश्चित् विद्यार्थी आसीत्। सः सर्वदा त्वराशीलः। सः चिन्तयति स्म यत् यावच्छक्यं तावत् शीघ्रं सर्वशास्त्राणि अधीत्य अन्येषां सहपाठिनाम् अपेक्षया अग्रे गन्तव्यम् इति।

वृषभः इच्छापूरणार्थं सर्वदा चिन्तयति स्म। किन्तु कोऽपि उपायः न स्फुरितः।

महादेवशास्त्रिणां गृहस्य अट्टे केचन ताडपत्राणां पुरातनग्रन्थाः आसन्। ग्रामीणानां विश्वासः आसीत् यत् ते ग्रन्थाः मन्त्रशास्त्रसम्बन्धिनः इति। 'तेषु ग्रन्थेषु विद्यमानाः विषयाः ज्ञातव्याः' इति वृषभस्य महती इच्छा। किन्तु एतदर्थं महादेवशास्त्रिणः अनुमतिः न आसीत्। अतः तत्रत्यछात्रेषु कोऽपि तेषां ग्रन्थानां बाह्यस्वरूपम् अपि न दृष्टवान् आसीत्। वृषभः तेषां ग्रन्थानां दर्शनेच्छाम् आत्मनि निरोद्धुं न शक्नोति स्म।

कदाचित् आचार्येण महादेवशास्त्रिणा राजधानीं प्रति गन्तव्यम् आपतितम्। एकसप्ताहानन्तरं प्रत्यागमिष्यामि इति उक्त्वा सः राजधानीं प्रति प्रस्थितः।

एषः एव सदवकाशः इति चिन्तयन् वृषभः महान्तं सन्तोषम् अनुभूतवान्।

तद्दिने रात्रौ सर्वे सहपाठिनः यदा निद्रामग्नाः आसन् तदा वृषभः मौनम् अट्टम् आरूढवान्। पेटिकाम् एकाम् उद्घाट्य ग्रन्थम् एकं बहिः आनीतवान्। तस्य ग्रन्थस्य आरम्भे एव लिखितम् आसीत् यत् अत्रत्यमन्त्रस्य जपेन यः कोऽपि मनुष्यः अपेक्षितं रूपं प्राप्तुं शक्नोति इति। एतेन सन्तुष्टः वृषभः तं मन्त्रं त्रिचतुर्वारं पठन् कण्ठस्थीकृतवान्। अनन्तरं ग्रन्थं पेटिकायां यथापूर्वं स्थापयित्वा उत्साहेन अधः आगतवान्।

"सुभद्रा"



'अन्येषां सहपाठिनाम् अपेक्षया अहम् एव श्रेष्ठः' इति चिन्तयतः तस्य सन्तोषस्य इदानीं सीमा एव न आसीत्।

अनन्तरदिने प्रातःकाले समिधः आनेतुं पूजार्थं पत्रपुष्पाणि आनेतुं च सर्वे शिष्याः अरण्यं प्रति प्रस्थिताः। आत्मना ज्ञातं मन्त्र-रहस्यं अन्तः निगूहितुम् अशक्तः वृषभः "अहम् अद्भुतमन्त्रं जानामि" इति सगर्वम् उक्तवान्। किन्तु तस्य वचने कस्य अपि विश्वासः न उत्पन्नः। सर्वे तं उपहासेन पीडयितुम् आरब्धवन्तः।

तदा उद्विग्नः वृषभः उक्तवान्-"यदि अहम् इच्छामि तर्हि मन्त्रद्वारा इदानीम् एव अपेक्षितं रूपं प्राप्तुं शक्नोमि" इति।

"एवं वा? महात्मा खलु भवान्? भवतः नाम वृषभः किल? अतः नाम्नः अनुगुणं वृषभरूपं प्राप्नोतु, पश्यामः" इति सहपाठिनः हसन्तः उक्तवन्तः।

वृषभः तत्क्षणे एव मन्त्रजपं कृतवान्। वृषभरूपं प्राप्तवान् च। एतेन विस्मिताः सहपाठिनः तदेकदृष्ट्या तं पश्यन्तः आसन्।

अत्रान्तरे समीपे एव व्याघ्रगर्जनं श्रुतम्। केचन प्राणिनः धावन्तः आगत्य ततः पलायिताः। एतत् दृष्ट्वा भीताः सन्तः सर्वे शिष्याः समीपस्थान् वृक्षान् आरूढवन्तः। वृषभरूपी वृषभः आत्मनः अविवेकितां ज्ञातवान्। सः मन्त्रजपेन अपेक्षितं रूपं प्राप्तुम् उपायं जानाति स्म। किन्तु प्राणिरूपतः मनुष्यरूपं प्राप्तुं किं करणीयम् इति सः न जानाति स्म।

वृषभः 'इदानीं किं करणीयम्?' इति चिन्तयन् आसीत्। तावति काले व्याघ्रः तत्र आगतः एव। व्याघ्रदर्शनेन भीतः वृषभः पृष्ठतः परिवृत्य धावितुम् आरब्धवान्। कथञ्चित् व्याघ्रमुखात् आत्मानं रक्षन् अरण्यसीमाम् अतिक्रम्य ग्रामं प्रविष्टवान्।

तदानीं तु मध्याह्नसमयः। बहुदूरं यावत् धावनेन वृषभः बुभुक्षया बहुधा पीडितः आसीत्। सः वृषभरूपेण आसीत् इति कृत्वा कोऽपि गृहस्थः भोजनं न ददाति किल?

अतः कथं बुभुक्षा निवारणीया ? इति समस्या तं बाधते स्म। 'बुद्ध्या अहं विपत्तिम् आहूतवान्। कीदृशम् अकार्यं कृतवान् अहम् !' इति पश्चात्तापम् अनुभूतवान्।

अनिच्छन् अपि वृषभः समीपस्थं केदारं प्रविष्टवान्। अन्तः गत्वा सस्यानि खादितुम् आरब्धवान्। एतत् दृष्ट्वा कुपितः क्षेत्ररक्षकः दण्डं स्वीकृत्य धावन् आगतवान्। वृषभस्य उपरि यथेष्टं दण्डेन प्रहर्तुम् आरब्धवान् च। तदा वेदनाम् अनुभवन् वृषभः धावन् ग्रामं प्रविष्टवान्।

वृषभस्य कष्टम् एतावता अपि न समाप्तम्। सः ग्रामेषु मार्गे गच्छन् आसीत्। एतत् दृष्ट्वा कश्चित् दृप्तवृषभः आक्रमणं कृतवान्। तदा वृषभः पुनः धावितुम् आरब्धवान्। सः दृप्तवृषभः तु अनुधावितवान् एव। शृङ्गाभ्यां पीडयितुम् आरब्धवान् च।

दृप्तवृषभतः रक्षणार्थं मार्गेषु उपमार्गेषु च धावन् एषः वृषभः कथञ्चित् तस्य पीडातः मुक्तः अभवत्।

अनन्तरं सः कस्यचित् वृक्षस्य छायायां स्थित्वा धावनायासं परिहरन् आसीत्। तदा तद्ग्रामीणः महिषवणिक् भैरवः एतं वृषभं दृष्टवान्। एतस्य दर्शनेन एव सः ज्ञातवान् यत् एषः वृषभः अस्मद्ग्रामीणः न, अन्यस्मात् प्रदेशात् अकस्मात् आगतः इति।

भैरवः जागरूकतया वृषभसमीपम् आगत्य कदाचित् ताडयन् कदाचित् लालयन् च



एतं वृषभं स्वगृहं नीतवान्। गोष्ठे दृढया रज्वा बद्धवान् च।

तद्दिने रात्रौ अपि वृषभः उपवासम् एव आचरितवान्। किन्तु अन्ते असहनया बुभुक्षया पीडितः अनिवार्यतया इतरगावः इव तृणानि भक्षितवान्। 'वृषभजीवनं नरकतुल्यं' इति सः चिन्तितवान्।

अनन्तरदिने भैरवः एतं अन्यवृषभेण सह शकटकर्षणार्थं योजितवान्। किन्तु एषः वृषभः अन्येन सह समवेगेन गन्तुं न शक्तवान्। भैरवः तु चतुःपञ्चदिनानि यावत् एतं शकटकर्षणं पाठयितुं प्रयत्नं कृतवान्। किन्तु सः असफलः। अन्ते निराशः सः वृषभं अन्यस्मै विक्रीतवान्।

यः वृषभं क्रीतवान् सः एतस्य आकारेण बहु सन्तुष्टः। सः भैरवम् उक्तवान् यत् श्वः प्रातः आगत्य एतस्य नासिकायां रज्जुं योजयित्वा एतं नयामि इति।

नासारज्जुविषयं श्रुत्वा वृषभः भयेन कम्पितः। यतः सः पूर्वं स्वयं दृष्टवान् आसीत् यत् नासारज्जुयोजने कथं नासाछेदनं कुर्वन्ति, वृषभेण कीदृशी वेदना अनुभूयते च इति।

तद्दिने रात्रौ वृषभः सर्वशक्त्या रज्जुम् आकृष्टवान्। अन्ते महता प्रयत्नेन रज्जुं भञ्जयितुं सः शक्तवान्। सूर्योदयतः पूर्वं सः धावन् गुरुकुलं प्राप्तवान्।

गुरुकुलस्य आचार्यः महादेवशास्त्री राजधानीतः प्रत्यागतवान् आसीत्। सः शिष्याणां मुखतः अरण्ये प्रवृत्तं सर्वं वृत्तान्तं ज्ञातवान्। पशुरूपी वृषभः अश्रूणि मोचयन् यदा आचार्यसमीपम् आगतवान् तदा तत् दृष्ट्वा आचार्यः बहु खेदम् अनुभूतवान्। सः स्वकीयमन्त्रशक्त्या वृषभं पुनः मनुष्यरूपं प्रापितवान्।

मानवरूपं प्राप्तः वृषभः उच्चैः रोदनं कुर्वन् आचार्यस्य पादयोः पतितवान्। प्राणिरूपे अनुभूतं कष्टं सर्वं निवेदितवान्।

एतदनन्तरं वृषभः पुनः कदापि तन्त्रशास्त्रस्य प्रस्तावं न कृतवान्। त्वराशीलतां त्यक्तवान् च।



# मयूरः

पिच्छसहितस्य मयूरस्य दर्शनम् अद्भुतकरम्। नीलहरितादिवर्णैः विराजमानं मयूरस्य पिच्छं द्रष्टॄन् आकर्षति। किन्तु मयूरस्य कण्ठध्वनिः तु श्रवणकठोरः।

प्राचीनकालात् आरभ्य भारते किं, ग्रीक् चीन इत्यादिषु देशेषु अपि मयूरपिच्छं अलङ्कारार्थम् उपयुज्यते। ग्रीक्जनानां भावना अस्ति यत् आर्गान् राजकुमार्याः रक्षणार्थं हीरादेवता सहस्रनेत्रयुतेन पिच्छेन अलङ्कृतं मयूरं नियोजितवती इति। अतः ते मयूरं हीरापक्षी इति नाम्ना आह्वयन्ति स्म। चीनदेशीयः राजा अधिकारिणां सत्कारार्थं मयूरपिच्छैः निर्मितं व्यजनं पुरस्काररूपेण ददाति स्म।

सुवर्णेन अपूर्वमणिभिः च अलङ्कृतं मोगलकालीनं मयूरसिंहासनं जगद्विख्यातम् अस्ति।

युरोपदेशेषु बहुकालतः आरभ्य उद्यानशोभार्थं मयूरं रक्षयन्तः सन्ति। तथापि मयूरस्य मूलस्थानं भारतं श्रीलङ्का च।

भूम्यां, भूमिं स्पृशत्सु वृक्षस्य शाखासु वा मयूरः स्वनीडम् आरचयति। मयूरी एकवारं षट् अण्डानि प्रसूते। आरम्भवर्षद्वये मयूरमयूर्योः मध्ये कोऽपि भेदः न दृश्यते। अनन्तरकाले शरीरे पिच्छम् उत्पद्यते। शाखासु उपविश्य पिच्छं विस्तारयतः मयूरस्य अपेक्षया इतस्ततः उड्डयतः मयूरस्य शोभा अधिका।

मयूरः अस्माकं राष्ट्रियः पक्षी।



## चित्रशीर्षिका-स्पर्धा  पारितोषिकं ५०/- रूप्यकाणि

विजितां शीर्षिकां जून्-८५ मासे प्रकटयिष्यामः।





❀उपरितनं चित्रद्वयं पश्यन्तु। तस्य युक्तां शीर्षिकां परस्पर-सम्बन्धि--वाक्यद्वयेन लिखित्वा एप्रिल्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। स्पर्धायां विजेता ५०/ – रूप्यकात्मकं पारितोषिकं प्राप्स्यति। ❀ शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। ❀अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

चन्दमामा (संस्कृतम्)
७३/२ 'अक्षरम्', रङ्गारावमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४

---

'फेब्रवरी' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–

प्रथमचित्रम्– प्रमोदे प्रमादः।
द्वितीयचित्रम्– प्रभाते प्रमोदः।

प्रेषकः– एन्. श्रीधरः, ए. पि. आर. स्कूल्, कोत्तपेटे, कर्नूल-५१८००४

---

## भवन्तः जानन्ति वा? (उत्तराणि)

१. सान्फ्रान्सिस्को नगरे ११४५ तमे वत्सरे मार्च २५ तमे दिनाङ्के। २. पेशावर।
३. पल्लवः। ४ राजा धिल्लू। ५. आगरा।

Printed by B. V. REDDI at Prasad Process Private Ltd., and Published by B. VISWANATHA REDDI for CHANDAMAMA CHILDREN'S TRUST FUND (Prop. of Chandamama Publications) 188, Arcot Road, Madras-600 026 (India). Controlling Editor: NAGI REDDI.

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| अट्टः- | Loft | नासारज्जुः- | Nose-chord |
| अनुरोधः- | Compulsion | निर्वाचितः- | Elected |
| अन्यथाभावः- | Misunderstanding | नीडः- | Nest |
| अवकरकण्डोलः- | Dustbin | पक्षः- | Wing |
| आणिः- | Nail | पिच्छम्- | Feather |
| उत्कोचः- | Bribe | पुच्छम्- | Tail |
| उदरोपपीडम्- | Heart's content | प्रातिवेशिकः- | Neighbour |
| उपायनम्- | Gift | मुद्गरः- | Hammer |
| औरसःपुत्रः- | One's own son | रज्जुः- | Rope |
| कवाटः- | Shutter | वज्रवणिक्- | Diamond merchant |
| कण्टकम्- | Thorn | वृतिः- | Fence |
| कुण्डलाकारः- | Encircle | वृषभः- | Bullock |
| कुल्या- | Channel | वेष्टी- | Dhoti |
| केदारः- | Field | व्यजनम्- | Fan |
| खलीनम्- | Bridle | शतधा- | Into hundred pieces |
| गर्तः- | Pit | शाकः- | Vegetable |
| गवाक्षः- | Window | शृङ्गम्- | Horn |
| गिलित्वा- | Having swallowed | सीवनम्- | Sewing |
| गोष्ठः- | Cattle-shed | सूची- | Needle |
| छदिः- | Roof | सोपानम्- | Step |
| त्सरुः- | Hilt of the sword | सन्दंशिका- | Forceful |
| दृप्तः- | Haughty | स्तम्भनम्- | Rigidity |
| द्विधा- | In two parts | स्यूतवान्- | Sewed |

# मम प्रियभगिनी किल भवती ?

| | |
|---|---|
| पद्मनाभः- मालति ! एतत् युतकं क्षालयति वा ? | Malathi, will you wash this shirt? |
| मालती- न भोः, मम बहूनि कार्याणि सन्ति । | No, I have a lot of work to do. |
| प- भवत्याः वस्त्राणि क्षालयति किल ? तत्-सन्दर्भे एतदपि क्षालयतु नाम । | Won't you be washing your clothes? Why don't you wash mine also along with yours? |
| मा- तत्र स्थापयतु, शक्यं चेत् क्षालयामि । | Put it there, let me see. |
| प- मम करवस्त्रं कुत्र ? | Where's my hanky? |
| मा- तत्रैव कुत्रापि स्यात् भोः । | It must be there, somewhere. |
| प- लेखनी अपि न दृश्यते । | My pen is also missing. |
| मा- हुँ, एषा लेखनी, एतत् करवस्त्रम् । महा-पुरुषः संवृत्तः भवान् । सर्वाणि वस्तूनि हस्ते एव दातव्यानि । | Hum... Here's your pen and this is your hanky. What a bigshot you've become! I have to find your things for you! |
| प- हन्त ! अस्य युतकस्य कुडमलः नष्टः । | Oh! The shirt has no button! |
| मा- अये महानुभाव ! शीघ्रम् एव विवाहितः भवतु भवान् । तदा पत्नी एव सर्वं सज्जी-कृत्य दास्यति । | Your Highness! You ought to get married. Your wife will help you with your things then. |
| प- तदस्तु, अये चण्डि ! कृपया कुडमलं योजयित्वा ददातु । | Let us think of it later, my dear shrew. Now please sew the button on to this shirt! |
| मा- न शक्यते भोः, पठनीयं बहु अस्ति मम, परीक्षा आसन्ना । | No, I'm sorry. I have a lot to read. Examinations are approaching. |
| प- एकनिमेषात्मकं कार्यम् एतत् । भवती मम प्रियभगिनी किल ? आगामि सप्ताहे भवती यत् चित्रं सूचयति, तदर्थं भवतीं निश्चयेन नेष्यामि । | It's a small job, after all. It will hardly take a minute for you. You are my beloved sister, aren't you? Next week I will take you to a movie you like. |
| मा- सर्वदा भवान् एवम् एव । युतकं ददातु तावत् । | You are always like that. All right, give me the shirt. |